Vol. - XVIII, 2021-22

UGC CARELISTED
ISSN : 2248-9495

# जयन्ती

# JAYANTĪ

॥अमृत-महोत्सव-विशेषाङ्कः॥

## अष्टादशं पुष्पम्

सान्दर्भिक-पुनरीक्षितवार्षिकशोधपत्रिका
**Refereed and Peer Reviewed Annual Research Journal**

2021-22





केन्द्रीयसंस्कृतविश्वविद्यालयः

जयपुरपरिसरः
त्रिवेणीनगरम्, गोपालपुरा-बाईपास, जयपुरम्-302 018
दूरभाषाङ्क : 0141-2761115 (कार्यालयस्य)
अणुसङ्केतः (ई-मेल) : jayantijournal@gmail.com
वेबसाइट : www.csu-jaipur.edu.in



**प्रो. भगवतीसुदेशः**

प्रधानसम्पादिका

निदेशकः, केन्द्रीयसंस्कृतविश्वविद्यालयः,

जयपुरपरिसरः, जयपुरम्

**सम्पादकाः**







**प्रो. विष्णुकान्तपाण्डेयः**

आचार्यः

व्याकरणविद्याशाखा

**डॉ. पवनव्यासः**

सहायकाचार्यः

दर्शनविद्याशाखा

**डॉ. विजयकुमारदाधीचः**

सहायकाचार्यः

शिक्षाशास्त्रविद्याशाखा

प्रो. श्रीनिवास वरखेड़ी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम्)



Prof. Shrinivasa Varakhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




# ✻ शुभाशंसनम् ✻

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।।**

केन्द्रीयसंस्कृतविश्वविद्यालयस्य जयपुरपरिसरीयाया वार्षिकशोधपत्रिकाया जयन्त्या अष्टादशोऽङ्कः प्रकाश्यत इति विज्ञाय मे मनो महान्तमानन्दमनुभवति। पत्रिकेयं संस्कृतस्य शास्त्राणां च विकासाय स्वकीयं महत्त्वपूर्णं योगदानं प्रददातीत्यत्रापि नास्ति संशयावसरः। यैः संस्कृतज्ञैः स्वतन्त्रताप्राप्त्यर्थं स्वकीयं महत्त्वपूर्णं योगदानं दत्तं, विशिष्य तेषां संस्कृतस्वातन्त्र्यवीराणां विषय एव लेखाः पत्रिकाया अस्या अङ्केऽस्मिन् प्रकाशिताः सन्तीति ज्ञात्वा मोमुदीति नश्चेतः।

केन्द्रीयसंस्कृतविश्वविद्यालयस्य जयपुरपरिसरे तत्स्थापनाकालादेव व्याकरणादि-शास्त्रपरम्पराऽनुसन्धानं सारस्वतसाधना च प्रवर्धमाना दरीदृश्यते। काशीवच्चकास्ति जयपुरम् । अत एव अपरा काशीति नाम्ना व्यवह्रियते।

अत्र नैकैः विविधविद्याविद्योतितान्तःकरणैः प्राच्यप्रतीच्योभयविधविद्याविचक्षणैः विद्वद्भिः स्वकीयवैदुष्यपूर्णलेखैः जयन्त्या अङ्कस्यास्य शोभा वर्द्धितास्ते सर्वेऽपि धन्यवादार्हाः सन्ति । विशिष्य परिसरस्य निदेशिकाया आचार्याया भगवतीसुदेशमहोदयाया अभिनन्दनं करोमि । यतो हि तासां निर्देशन एव जयन्त्या अङ्कोऽयं प्रकाश्यत इति ।

अन्ते च यैर्विद्वद्भिः पत्रिकाया अस्याः सम्पादने स्वकीयं महत्त्वपूर्णं योगदानं दत्तं, तान् सर्वानपि विदुषः सम्पादकान् अभिनन्दामि। जयन्त्या अङ्कोऽयं नूनमेव राष्ट्रस्य संस्कृतस्य चोन्नतये भविष्यतीति मे दृढो विश्वासः -

भावत्कः

(प्रो. श्रीनिवासवरखेड़ी)

**प्रो. भगवती सुदेश**
निदेशक
**केन्द्रीय संस्कृत विश्वविद्यालय**
(संसद के अधिनियम द्वारा स्थापित)
**जयपुर परिसर**
त्रिवेणी नगर, गोपालपुरा बायपास,
जयपुर-302018 (राजस्थान)



**PROF. BHAGWATI SUDESH**
Director
**CENTRAL SANSKRIT UNIVERSITY**
(Established by an Act of Parliament)
**JAIPUR CAMPUS**
Triveni Nagar, Gopalpura Bypass,
Jaipur-302018 (Rajasthan)

# निदेशकीयम्

**अयि प्रगुणगुणविद्याः पारिषद्याः!**

'आदानं हि विसर्गाय सतां वारिमुचामिव' इत्युक्तिं समाचरतः केन्द्रीयसंस्कृतविश्वविद्यालयस्य जयपुरपरिसरस्य शोधपत्रिका जयन्ती जयन्तीव विगतेभ्यः षोडशभ्यः वर्षेभ्यः परिसरस्यास्य यशः ख्यापयन्ती समुल्लसति। सम्प्रति सप्तदशेन सारस्वतपुष्पेण सुरभारत्याः समर्चनां कुर्वताम् अस्माकं मनांसि नितरां मोदन्ते। ''जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः'' इति पुराणवचनम् अद्यत्वेऽपि सार्थकं कलयत्येषा त्रैभाषिकी वार्षिक-सान्दर्भिक-पुनरीक्षितशोधपत्रिका जयन्ती।

विविधविद्याविद्योतितान्तःकरणानां कुलपतिमहोदयानाम् आचार्यश्रीनिवासवरखेडिवर्याणां संरक्षणे मार्गदर्शने चेयं शोधपत्रिका इतोऽप्युत्कर्षं प्राप्स्यतीति द्रढीयान् मे विश्वासो वर्तते।

जयन्त्या एतत्पुष्पं रचयितुं यैः लेखकैः विविधशास्त्रज्ञानपूर्णानि शोधपत्राणि सम्प्रेषितानि तेभ्यः सर्वेभ्यः परिसरपक्षतः कार्तज्ञ्यकुसुमाञ्जलिं समर्पयामि। अस्याङ्कस्य सम्पादनं कृतवते पदशास्त्रविचक्षणाय प्रो. विष्णुकान्तपाण्डेयमहोदयाय वाक्यशास्त्रविशारदाय डॉ. पवनव्यासाय शिक्षाशास्त्रमर्मज्ञाय विजयकुमारदाधीचाय च भूरिशः साधुवादान् वितीर्य श्रीकुमारिलभट्टपादगिरा निदेशकीयं वक्तव्यमुपसंहरामि–

**तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।**
**सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः।।**

Bhagwati Sudesh

(प्रो. भगवतीसुदेशः)
निदेशक

# सम्पादकीयम्

**शोधाश्रिता सुललिता सरसा गभीरा सारस्वतं सुविमलं भुवनं वहन्ती ।**
**चित्तं मुदा निजरसात्कविपण्डितानां निज्यानिधिश्च तनुयात् शिवदा जयन्ती ।।**

अयि सुरसरस्वतीसमाराधनैकव्रतभव्याः सभ्याः!

सनातनभारतीयज्ञानपरम्परायाः संवर्द्धनाय संरक्षणाय च केन्द्रीयसंस्कृतविश्वविद्यालयस्य जयपुरपरिसरेण प्रतिवर्षं सान्दर्भिक-पुनरीक्षितशोधपत्रिकायाः जयन्त्याः सम्प्रकाशनं विधीयते । जयन्त्याः अष्टादशं पुष्पमिदं भारतवर्षस्य स्वतन्त्रतायाः अमृतमहोत्सवविशेषाङ्करूपेण स्वातन्त्र्यवीरेभ्यः संस्कृतज्ञेभ्यः सप्रणति समर्प्यते । अस्मिन्नङ्के न केवलं वेद-धर्म-दर्शन-साहित्य-ज्योतिषप्रभृतिपारम्परिकशास्त्राणाम् अनुसन्धानपरकाणि शोधपत्राणि विलसन्त्यपि तु भारतवर्षस्य स्वातन्त्र्यसङ्ग्रामे हुतात्मनां संस्कृताभिमानिनां जीवनचरितमवलम्ब्य लिखितानाम् अनुसन्धानात्मकलेखानामपि समुचितसन्निवेषो विद्यते। स्वतन्त्रतायाः अमृतमहोत्सवे विकसितमिदमष्टादशं पुष्पं विविधवर्णप्रकर्षेण ज्ञानसौरभातिशयेन विद्यासाररसेन च सचेतसां तत्रभवतां पावनं मानसं निश्चप्रचं मोदयिष्यतीति विश्वसिमः।

केन्द्रीयसंस्कृतविद्यापीठपक्षतः जयपुरे 1989-90 तमे ख्रीष्टाब्दे इदम्प्रथमतया जयन्त्याः प्रकाशनं जातमासीत्, तदारभ्य इयं शोधपत्रिका प्रायः प्रतिवर्षमेव भारतीयज्ञानविज्ञान-परम्परायाः विविधविषयान् स्वाङ्के निधाय स्वहृदयसंवादभाजां सहृदयानां तत्रभवतां विशदीभूते मनोमुकुरे आविर्भवतीति मोदामहे वयं नितराम् ।

स्वतन्त्रतायाः अमृतमहोत्सवेऽस्मिन् अस्माकं राष्ट्रस्य स्वातन्त्र्यसङ्ग्रामे संस्कृतज्ञानां सुमहद्योगदानमासीदिति सतर्कं प्रबोधयन्ती इयं जयन्ती सततं शिवत्वं सम्पादयेत् पाठकानामिति आशास्य भट्टकुमारिलपादगिरा सम्पादकीयां वाचमुपसंहरामः-

**आगमप्रवणश्चायं नापवाद्यः स्खलन्नपि।**
**न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते।। - (श्लोकवार्तिके)**

**सम्पादकाः**

# ❊ अनुक्रमणिका ❊

# श्रीमद्भगवद्गीतोपनीता भारतीयस्वतन्त्रता

**प्रो. भगवती सुदेशः**



द्वितीयविश्वयुद्धोत्तरयुगे विश्वे उपनिवेशवादस्य समाप्तिः अभवत्। उपनिवेशवादाय सर्वाधिकः आघातः भारतस्य स्वतन्त्रता आसीत्। रात्रौ एव विश्वे द्वितीयं सर्वाधिकं जनसंख्यायुक्तं राष्ट्रं, विश्वस्य जनसंख्यायाः 1/6 भागः स्वातन्त्र्यं प्राप्नोत्। नरसंहारेण सह भारतस्य विभाजनमभवत् चेदपि भारतस्य स्वातन्त्र्यदिवसः एकः सुखदः कार्यक्रमः अस्ति, यं प्रतिवर्षं कोटिशः जनाः विश्वस्य नैकेषु भागेषु परिपालयन्ति।

भारतस्य स्वतन्त्रतायाः आन्दोलनं राजनैतिकं नासीत्। बहवः स्वातन्त्र्यसमरसाधकाः आध्यात्मिकचिन्तनैः परिपूर्णा आसन्। अस्मिन् स्वतन्त्रतायाः अमृतमहोत्सवे भारतस्य स्वातन्त्र्यस्य कृते सर्वस्वं दत्तवन्तः देशभक्ताः अस्माभिः सभक्तिश्रद्धं स्मरणीयाः। एतेषु बहुभिः अग्रगण्यैः स्वातन्त्र्यस्य समाराधकैः श्रीमद्भगवद्गीतया प्रेरणादृष्टिः प्राप्ता आसीत्। अस्माकं बहवः उत्कृष्टाः स्वतन्त्रतासेनानायका भगवद्गीतया उत्साहं, साहसं प्रेरणां च प्राप्तवन्तः। तस्मात् तेषां व्यक्तित्वे विचारेषु च भगवद्गीतायाः किं योगदानमिति अस्मिन् लेखे प्रकाशयामः।

भगवद्गीता- एकं सर्वमान्यं पुस्तकम्। एतद् हस्ते संस्थाप्य स्मितवदनाः असंख्यकाः मृत्युपाशं गृहीतवन्तः। 1905 तमे वर्षे बङ्गालदेशे स्वदेशी-आन्दोलनस्य आरम्भः अभवत्,यत्र 50,000 जनाः गीतां हस्ते धारयन्तः बहिष्कारस्य प्रतिज्ञां कृत्वा वीथिषु आगत्य आङ्ग्लानां पदार्थवस्तूनि निराकृत्य आङ्ग्लान् भारतात् बहिः प्रेषयितुं बाध्यान् अकुर्वन्।

इत्थं तत्र विविधस्वतन्त्रतासेनानीनां जीवनकथानां व्यक्तिगतवृत्तान्ताः बहुत्र उपलभ्यन्ते यत्र भगवद्गीतया प्रेरणां सम्प्राप्य इमे स्वातन्त्र्यस्य समराङ्गणे स्वीययोगदानं प्रायच्छन्।

### 1. लोकमान्यतिलकः (1856-1920)

**'कर्मयोगी भवितुं प्रेरयति गीता' (The Gita inspires to be Karma-yogi!)**

लोकमान्यतिलकः भारतीयक्रान्तेः जनकः** (Father of Indian Unrest) इति नाम्ना प्रसिद्धः अभवत्। स एव प्रथमः जनः आसीत् यः काङ्ग्रेस-सत्रेषु ब्रिटेन-देशात् पूर्ण-स्वातन्त्र्यं याचितवान्। स्वतन्त्रतासङ्घर्षसमये सः कथं स्वस्य मनोबलं वर्धयितुं शक्नोति स्म इति तस्य चिन्तनात् स्पष्टतया द्रष्टुं शक्यते। गीतया प्रेरितः सः व्याख्यातवान् यत् - ''मम दृढनिश्चयः अस्ति यत् भारतस्य सर्वेऽपि स्त्री-पुरुष-बालाः गीतायाः सन्देशम् अवगच्छेयुः इति सर्वाधिकमहत्त्वपूर्णम् अस्तीति'' (It is my firm conviction that it is of utmost importance that every man, woman and child of India understands the message of the Gita.) इति ।

तेन गीताविषये ''गीतारहस्यम्'' इति पुस्तकं लिखितम्, यच्च अद्यत्वेऽपि गीताविषये लिखितेषु उत्तमग्रन्थेषु अन्यतमम् अस्ति। पुस्तकमिदं न केवलं धार्मिकजनैः अपितु राजनैतिकसामाजिककार्यकर्तृभिः अपि समानरूपेण प्रशंसितम् अस्ति।

## 2. बंकिमचन्द्र चट्टर्जी (1838-1894) Bankim Chandra Chatterjee (1838-1894)

"गीता दूरदृष्टा भवितुं प्रेरयति" (The Gita inspires to be a visionary)

यद्यपि बङ्किमचन्द्रः स्वतन्त्रतासेनानी नासीत्, तथापि सः स्वलेखनद्वारा विशेषतः स्वस्य मूलप्रदेशे बङ्गालदेशे देशभक्तिभावनाः जागरयति स्म। तस्य लेखन्या अन्तर्दृष्टियुक्तबोधः जनानां मनसि राष्ट्रवादस्य भावम् अजागरयत्। सः स्वस्य आनन्दमठ इति प्रसिद्धोपन्यासात् वन्दे मातरम् इति घोषम् अयच्छत्। आनन्दमठकथायां मुस्लिमशासनस्य विरुद्धे आकर्षकपात्रत्वेन चित्रिताः योद्धारः सन्यासिनः गुप्तयुद्धं कुर्वन्तः प्रदर्शिताः सन्ति। भारतीयाः एतां कथां स्वस्थितेः रूपकरूपेण गृहीतवन्तः। ते शस्त्राणि गृहीत्वा आङ्ग्लान् देशात् बहिः निष्कासयितुं रणघोषम् मन्यन्ते स्म। वन्दे मातरम् इति भारतीयस्वतन्त्रतायाः आदर्शवाक्यम् अभवत्।

यस्य लेखनेन स्वाधीनतासंग्रामस्य ज्वाला प्रज्वलिता, स्वयं तेन गीतया एव प्रेरणा सम्प्राप्ता। अनेन ग्रन्थेन एतावान् प्रभावितः आसीत् यत् सः ऐतिहासिक-साहित्यिक-अनुसन्धानाधारितं श्रीकृष्णचरितम् इति ग्रन्थमपि अलिखत्। अग्रे सः भगवतः कृष्णस्य जीवनस्य टीकायाः लेखनार्थम् उत्सुकः अभवत्। परन्तु तस्य मृत्योः समये केवलम् अध्यायत्रयम् एव सम्पन्नम् अभवत्।

## 3. महात्मा गाँधी (1869-1948) Mahatma Gandhi (1869-1948)

"गीता- एकः आध्यात्मिकः कोशः" (The Gita - A Spiritual Dictionary)

भारतस्य स्वतन्त्रता-आन्दोलने गान्धिनः भूमिकायाः विषये व्याख्यानस्य आवश्यकता एव नास्ति। गान्धिनः नाम एव भारतस्य स्वातन्त्र्यसङ्घर्षस्य चित्राणि उद्भावयति। अहिंसा सत्याग्रहः चेति इति अतुलनीयशस्त्राभ्यां भारतीयस्वाधीनतासंग्रामे क्रान्तिरानीता। ननु अस्य महापुरुषस्यापि धैर्यस्य विशालहृदयस्य च स्रोतः गीता आसीत्। सः लिखति यद् - "अहं भगवद्गीतायां सान्त्वनां प्राप्नोमि। यदा निराशा मम मुखं प्रेक्षते तथा च अहं न एकमपि प्रकाशकिरणं पश्यामि तदा अहं पुनः भगवद्गीतायाः शरणं गच्छामि। अहम् अत्र एकं श्लोकं प्राप्नोमि, तत्क्षणमेव प्रचण्डदुःखे नैराश्ये च स्मितं कर्तुम् आरभामि। मम जीवनं दुःखदघटनाभिः परिपूर्णमस्ति। परन्तु अहम् एताभिः दुर्घटनाभिः प्रभावितः नाभवम्। एतदर्थम् अहं भगवद्गीतायाः शिक्षायाः ऋणी अस्मि" इति।

## 4. श्रीअरविन्दघोषः (1872-1950)

"The Gita inspires to be a fighter" (गीता योद्धा भवितुं प्रेरयति)

सः भारतीयस्वतन्त्रतासंग्रामे प्रारम्भिकेषु महान् क्रान्तिकारिषु अन्यतमः विद्वान्, दूरदर्शी, रहस्यपूर्णव्यक्तित्ववान् चासीत्। तस्य दृढ़विश्वासः आसीत् यत् स्वतंत्रतायाः एकमात्रविधिः जनान् अधमप्रकृतितः मोचयित्वा तेषाम् आनंदमयं दिव्यञ्च जीवने स्थानांतरणमस्ति। किञ्च विधिरयं गीताशास्त्रात् समीचीनतया अवगन्तुं शक्यः। तेन गीतायाः तस्याः रहस्यानां च विषये स्वसुंदरनिबन्धे भारतस्य उत्थाने तथा मानवतायाः उद्धारे गीतायाः संदेशः पुनरुक्तः - आध्यात्मिकता जीवनात् विच्छिन्नं वस्तु इति चिन्तनं दोषाय, वयं पुनरपि वदामः - धर्मस्य ऊर्ध्वता अस्य संसारस्य संघर्षेभ्यः उपरि सन्ति इति चिन्तनम् असमीचीनमस्ति। श्रीकृष्णस्य अर्जुनं प्रति पौनःपुन्येन कथनं संघर्षं कर्तुं बलं प्रयच्छति युद्धं कुरु, स्वविरोधीन् च निपातय। "माम् स्मर युद्धं कुरु।", अध्यात्मपूर्णहृदयेन, तृष्णाविरहितेन, स्वार्थवादरहितेन च सर्वाणि कार्याणि त्यज, युद्धं कुरु। इति।

**5. दामोदरपन्तचापेकर (मृत्युः - 1898) Damodarpant Chapekar (executed 1898)**

"गीता- एका शाश्वतिकसहचरी" (The Gita- an eternal soul mate)

1880 तमस्य दशकस्य अन्ते भारतस्य महाराष्ट्रप्रान्ते प्लेग (plague) इत्येका महाव्याधिः विपत्तिरूपेण आगत आसीत्। अनेन महाव्याधिना सहस्राधिकजनाः मृताः। औपनिवेशिकसर्वकारः दुःखितजनानाम् उपशमनव्यवस्थायाः विषये अतीव उदासीनः आसीत्। असहायकानाम् आङ्ग्लेयानां कृषिनीतीनां कारणेन पारम्परिकखाद्यस्य अपेक्षया कार्पासस्य उत्पादनाय बलप्रदानेन जनानाम् उपरि प्लेग इत्यस्य प्रभावः अधिकः अभवत्। भारतीयानां सम्मुखे एतादृशासु गम्भीरासु परिस्थितिषु प्लेग-ग्रस्तस्य प्रदेशस्य पुणेनगरे विक्टोरिया-राज्ञ्याः स्वर्णमहोत्सवस्य भव्योत्सवः भव्यतया च सह आयोजितः अभवत्। एतेन भारतीयेषु औपनिवेशिकसर्वकारस्य विरुद्धं अत्यन्तक्रोधः आक्रोशः चाभवत्। अस्मिन् एव काले आङ्ग्लशासनस्य विरुद्धं पूर्वसीमितस्वातन्त्र्यसङ्घर्षः महाराष्ट्रे जनसमर्थनं गतिं च प्राप्तवान्।

अस्य विषये एकः प्रसङ्गः अभवत्। आङ्ग्लानां दयारहितया मनोवृत्त्या क्रुद्धः दुर्भिक्षस्य असंख्यदुःखैः आक्रोशितः च दामोदरपन्तः चापेकरः पुणेनगरे 1897 तमे वर्षे जूनमासस्य 22 दिनाङ्के ब्रिटिश-प्लेग-आयुक्तं राण्ड-इत्येनं, ब्रिटिशपदाधिकारी 'आयरस्ट्' इत्येनं च गोलिकाभिः मारितवान्। पश्चात् तस्य मित्रद्वयेन विश्वासघातः आचरितः, अतस्तस्मै मृत्युदण्डः अपि दत्तः। एतस्य स्वातन्त्र्यसेनानायकस्य गीतायाः विषये आदरः कियान् आसीत् यदा सः स्वमित्राणां द्रोहकारणात् मृत्युदण्डं सम्प्राप्य 1898 तमस्य वर्षस्य एप्रिल-मासस्य 18 दिनाङ्के सः भगवद्गीतां हस्ते गृहीत्वा मृत्युपाशं चुम्बितवान्।

**6. गीता - विद्यानिधिगृहम् (The Gita - a scholarly treasure house)**

एनी बेसेन्ट, सी. राजागोपालचारी, के.एम. मुंशी प्रकाशश्चेति न केवलं भारतीयस्वाधीनतासंग्रामस्य प्रकाशकाः आसन्। एते सर्वेऽपि भगवद्गीतायाः विषये महान्तम् आदरं वहन्ति स्म। एवमेव आचार्य विनोबाभावेवर्यस्य महात्मागान्धिना सह अत्यन्तो निकटसम्बन्धः आसीत्। अनेन स्वातन्त्र्यानन्तरं भूमिवितरणसमस्यायाः समाधानार्थं भूदान-आन्दोलनं प्रारब्धम्, यच्च गीतायाः नूतनः अनुप्रयोगः आसीत्।

एतादृशी गीताभक्तिः एव अधोलिखितानां महात्मनां जीवनेषु प्रतिबिम्बिता भवति-

**7. मदनलाल ढिङ्गरा (1883-1909) Madanlal Dhingra (1883-1909)**

जीवन्तं व्यक्तित्वयुक्तम् आसीत् मदनलाल ढिङ्गरावर्यः तथा च सः 1909 तमे वर्षे लण्डन्नगरे एव कर्जन् वाइली (Cyrzon Wyllie) इत्येनं गोलिकया हतवान्। 1909 तमस्य वर्षस्य अगस्तमासस्य 17 दिनाङ्के लण्डन्-नगरे मृत्युदण्डस्य पत्रं प्रेषितम् अभवत्, ततः सः गीता-पत्रिकां हस्ते गृहीत्वा प्रयाणमकरोत्।

**8. खुदीराम बोस (1889-1908) Khudiram Bose (1889-1908)**

बङ्गप्रान्तस्य एषः युवा क्रान्तिकारी आसीत्। तस्य हिन्दुसंस्कृतेः गहनं ज्ञानम् आसीत्, प्राचीनकाले स्वर्णपक्षिनाम्ना (Golden Bird) प्रसिद्धः देशः एतावता परिमाणेन दुःखेन पीडितः इति दृष्ट्वा तस्य हृदयं द्रवितम् आसीत्। सः ब्रिटिश-अधिकारिणां हननम् अकरोत्। तस्मात् सप्तदशे वयसि एव ब्रिटिशसर्वकारात् मृत्युदण्डम्

अवाप्तवान्। तस्य मृत्योः समये तस्य अधरेषु "वन्दे मातरम्" इति घोषः विलसति स्म। तस्य मृत्योः समये तस्य हस्ते भगवद्गीता आसीत्।

### 9. हेमु कलानी (1923-1943) Hemu Kalani (1923-1943)

सिन्धस्य स्वातन्त्र्यसेनानी हेमु कलानी ब्रिटिशवस्तूनाम् बहिष्काराद् आरभ्य गान्धिनः अभियानेषु क्रान्तिकारि-कार्यक्रमेषु च स्वतन्त्रता-सङ्घर्षस्य सर्वेषु पक्षेषु प्रवृत्तः आसीत्। ब्रिटिशशस्त्रागारस्य लुण्ठनस्य षड्यन्त्रेणाभियोगे सः गृहीतः। भारतस्य स्वातन्त्र्यस्य कार्यस्य समाप्त्यर्थं भारतीयत्वेन पुनः जन्म प्राप्नुयादिति तस्य अन्तिमा इच्छा आसीत्। अस्य महान् स्वातन्त्र्यसेनानायकस्य वीरभावना एवं द्रष्टुं शक्या यत् मृत्युस्थानकं प्रति गच्छन् भयस्य स्थाने आत्मनः अमृतत्वविषये गीतायाः श्लोकम् उद्धृतवान्। भगवद्गीतां च हस्ते गृहीत्वा परलोकं गतः।

**सन्दर्भग्रन्थसूची**


1. M. K. Gandhi, Gita the Mother, edited by Jag Parvesh Chander. 1945, Karachi-Lahore: Indian Printing Works.
2. Annie Besant, The Bhagavad Gita. 1914, -dyar, Madras: Vasanta Press, The Theosophical Society.
3. Vishav Bandhu, - Complete Biography Of Madan Lal Dhingra,2021, Prabhat Prakashan Pvt. Ltd.
4. Hitendra Patel, -pritam krantrikari Khudiram Boss, 2019, Publications Division, New Delhi



*निदेशिका,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः*
*जयपुरपरिसरः, जयपुरम्।*

# ग्रहभावजफलचिन्तनविधौ प्राबल्यदौर्बल्यसमीक्षा

**प्रो. ईश्वरभट्टः**



सुविदतमेवैतत् तत्र भवतां निखिलनिगमागमविधूतचेतसां विपश्चिदां यदिह जगति जनिमतां सर्वतः श्रेयोमार्गप्रदर्शको वेद एव। तादृश वेदस्य चक्षुष्ट्वेन प्रथितं खल्विदं ज्योतिश्शास्त्रम्। तत्रास्य वेदाङ्गत्वं वेदविहितानां कर्माणां कालप्रतिपादकत्वात्। किञ्च इदं च शास्त्रं न केवलं वैदिककर्मानुष्टानतत्पराणां श्रोत्रियाणामेव कर्मानुष्टानयोग्यकालादि-निर्णायकत्वेनोपकारकमपि तु सामान्यस्यापि सर्वस्य तेन तेनानुष्ठेयानां लौकिकानमलौकिकानां च कर्मणां सफलतासिद्ध्यै योग्यकालादिज्ञापनेन नितान्त-मुपकारकमिति भौतिकविज्ञानप्रभावास्कन्धितैरपि विवेचनशीलैर्बहुभिरङ्गीकृतमस्ति।

वस्तुतः -

**''अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥''**

इत्युक्तरीत्या चतुर्दश विद्याः प्रसिद्ध्यन्ति। तासु चतुर्दश विद्यासु विशिष्य वेदाङ्गेष्वन्तर्भूतमस्ति इदं हि ज्यौतिषम्।

उक्तं च प्रश्नमार्गे -

**''छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्यौतिषं चक्षुषी च।**[1]
**शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्येवमाहुर्मुनीन्द्राः''॥ इति।**

जगतः शुभाशुभनिरूपणे प्रवृत्तमिदं शास्त्रं त्रिस्कन्धात्मकम्। तत्रैकस्तावद् गणितस्कन्धः। अपरस्संहितास्कन्धः। तृतीयो होरा स्कन्धः। तत्र गणितस्कन्धे गणितगोलौ प्रतिपाद्येते। संहिता स्कन्धे तु सम्यक् हितं प्रतिपाद्यं यस्याः सा संहितेति व्युत्पत्या सामान्यफलं, वर्षलक्षणं, जनक्षयपुष्टयादिसमस्तानां पदार्थानां लक्षणानि निरूप्यन्ते। होरास्कन्धे तु जातकप्रश्ननुहूर्तानि निगद्यन्ते। असौ होरास्कन्ध एव जातकस्कन्धाभिधानः। तत्र जगति प्राणिनां जन्मकालवशेन ग्रहजनितशुभाशुभफलनिरूपकं शास्त्रं जातकमिति। तत्रापि पूर्वोक्तत्रिस्कन्धे एव प्रमाणफलभेदेन विभागद्वयं परिकल्प्यते।

तत्र सूक्ष्मेक्षिया परिशीलनं कृते सति प्रमाणं गणितस्कन्धेति सर्वैरपि ज्योतिः शास्त्रभावनापरिपक्वबुद्धीनां विदुषाम् अनुभवसाक्षिकोऽयं विषयः। अवशिष्टौ स्कन्धौ फलात्मकौ स्तः।

उक्तं च -

**''प्रमाणफलभेदेन द्विविधं च भवेदिदम्।**[2]
**प्रमाणं गणितस्कन्धः स्कन्धावन्यौ फलात्मकौ''॥ इति।**

इत्थं सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकेऽस्मिन् ज्योतिःशास्त्रे ग्रहभावजफलचिन्तनविधौ प्राबल्यदौर्बल्यसमीक्षा इति विषयमुररीकृत्य निरूप्यतेऽत्र।

सर्वप्राथम्येन भावो नाम कः? इति जिज्ञासायां भू सत्तायां धातोः भू+णिच्, 'नन्दिग्रहपचादिभ्योल्युणिन्यचः' इत्यनेन सूत्रेण अण् प्रत्यये कृते सति भावशब्दस्य व्युत्पत्तिः प्रसिध्यति। अथ के ते पुनरेते भावा नाम, ये तनुधनसहजबन्धुसुतरिपुदाररन्ध्रशुभकर्मआयव्ययसंज्ञाः ज्योतिर्विद्भिः कल्पिता उच्यन्ते। भावयन्ति, उत्पादयन्ति, नृणां शुभाशुभानीति भावाः। यद्वा भावयन्ति निरूपयन्ति शुभाशुभानि एभिरिति भावाः राशयः। शुभाशुभज्ञानाय ज्योतिर्विद्भिः कल्पिताः तन्वादिसंज्ञिताः क्षेत्रविशेषाः। ते यावन्तं कालं पूर्वहरितमारभ्योद्गच्छन्ति स कालो लग्नादिसंज्ञितः। राशीनामुदयो 'लग्नम्' इत्यमरः। यद्वा लगतीति लग्नमिति व्युत्पत्या अभीष्टकाले क्रान्तिवृत्तस्य यः प्रदेशः उदयक्षितिजे लगति तदेव राश्यादिकं लग्नम्। तस्यैव होरात्मकल्यतनुमूर्त्या भिधं नाम। होरा आत्मा कल्यं तनुमूर्तिरित्येता अभिधाः, अभिधानानि यस्य तत् प्राग्लग्नमिति। वस्तुतः क्रान्तिवृत्तं षष्ट्युत्तरत्रिशतम् अंशात्मकमस्ति। तस्य द्वादशतमो भागः त्रिशदंशात्मक एकः भावेति पर्यवसितार्थो भवति। पूर्वोक्तलग्नभावसाधनरीतेः औचित्यमपि अभिनवदृशा आचार्यश्रीपतिना वर्णितं शास्त्रमीमांसकानामधस्तनपद्यपरिशीलनेन संवेधा भवति।
तदुक्तं यथा -

**''ज्ञेयोऽत्र प्रथमं हि जन्मसमयच्छायादियन्त्रैः स्फुटः**[3]
**तत्कालप्रभवाविलग्नसहिताः कार्यास्ततश्च ग्रहाः।**
**सिद्धान्तोक्तपरिस्फुटोपकरणैस्ते चासत्कर्मणा**
**भावाः खेटदृशो बलानि च ततस्तेषां विचार्याणि षट्''** ।। इति।

अमुमेव भावविचारं पोषयितुं होराशास्त्रस्य सूत्ररूपेण व्यवस्थापिते बृहज्जातके आचार्यः वराहः निगदति। तद्यथा -

**होरादयस्तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः।**[4]
**रिःफाख्यमित्युपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणि न नित्यमेके''** ।। इति।

अनेन श्लोकेन लग्नादिद्वादशभावानां देहधनादिस्वरूपत्वमुच्यते। एतैर्द्वादशभावैः शरीरिणां प्रश्नजातकेषु समस्तपदार्थाश्चिन्त्यन्ते। ततः सम्यग्विज्ञातजन्मकालस्यैव जातकफलं चिन्त्यम्। अत्र तनुः शरीरम्, कुटुम्बो भरणीयजनः सहोत्था भ्रातरः, बन्धुशब्देन मातृपितृभागिनेयादिरूच्यन्ते । पुत्राः आत्मजा, अरिशब्देन शत्रुरोगादिरूच्यते, पत्नी भार्या, मरणशब्देन द्रव्यनाशविपद्रोगपराभवादिरूच्यते, शुभशब्देन भाग्यधर्मादिरूच्यते। आस्पदशब्देनावलम्बः। आयशब्देन सर्वाभीष्टागमः। रिःफशब्देन पापरोगादिरूच्यते 'इति शब्देनामी द्वादशभावा एव सर्वजन्तूनां सर्वपदार्थज्ञापकाः भवन्तीति सूच्यते' । पुनस्तत्रैव -

**'कल्पस्वविक्रमगृहप्रतिभाक्षतानिचित्तोत्थरन्ध्रगुरुमानभवव्ययानि'**[5]

इत्यनेन पद्येन लग्नादारभ्य द्वादशभावानां नामानि पर्यायवाचित्वेन निरूपितानि।

एवमत्र आचार्यवराहेण एकस्मिन् अर्थे सम्प्रयुज्यमाणानां राशीनां भावानां च अभेदोपचारकाणां षट् पदान्यपि प्रयुक्तानि। **'राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्ययाः।'**[6] इति

इमानि षट् पदानि। राशिः, क्षेत्रं, गृहं, ऋक्षं, भं, भवनं, चेति। अत्र प्रत्ययो नाम ज्ञानम्। सम्प्रत्ययो नाम संज्ञानम्। उक्तं च हलधरेण - **'प्रत्ययोऽधीनविश्वासशपथज्ञाननिश्चये'** इति। वस्तुतः अत्र भावानां

पर्यायवाचकत्वेन प्रतिपादनस्यापि अर्थान्तरे ध्वनिः विभावनीयः। अत्र एकार्थसम्प्रत्ययो नाम फलविशेषनिरूपणे एकस्मिन् चिन्त्यविषये षड्लग्नानि चिन्त्यानीति।

तत्र क्रमशः जातकेषु लग्नराशिरेकः, अपरश्चन्द्राधिष्टितो राशिः, तयोरधिपतिस्थितराशिः, चन्द्रलग्नांशराशीं च इति। किन्तु प्रश्ने तावत् एकस्तावदुदयः, अपरः आरूढः, तृतीयः उद्यन्नवांशराशिः, चतुर्थः छत्रराशिः, पंचमः स्पृष्टाङ्गराशिः षष्ठश्चन्द्राधिष्टितराशिश्चेति षड्भिरेतैः फलं निरूप्यते आहोस्वित् फलं चिन्त्यते।

साम्प्रतं भावस्य शुभाशुभफलचिन्तनोपक्रमे के ते अंशाः विशेषतः परिशीलनीयाः सन्तीति विमृश्यते। प्रसङ्गेऽस्मिन् सर्वादौ भावः, भावाधिपतिः, भावकारकः तद्भावं विलोक्यमाणो ग्रहः, भावे व्यवस्थितः ग्रहः, तद्भावकारकेण सह विद्यमानो ग्रहश्चेति इमे अंशाः भावस्य वृद्धौ अतिमहत्वाधायकमित्यामनन्ति सर्वे। उक्तं च -

**''सर्वत्र भावगृहतत्पतिकारकारव्यैस्तद्युक्तवीक्षकखगैरपि तद् गणैश्च ।**[7]
**चिन्त्यानि भावजफलान्यखिलानि युक्त्या नृणां विलग्नभवनादथवा शशाङ्कात्''** ।। इति।

उक्तं च प्रश्नमार्गेऽपि -

**''स्वामिकारकखेचरश्च बलिनौ यस्येष्टभावस्थितौ**
**सम्पूर्णोऽनुभवक्षमश्च नियतं भावस्सनृणां भवेत् ।**[8]
**रिःफारातिमृतिस्थितौ च विबलौ यत्कारकाधीश्वरौ**
**भावोऽयं नहि सम्भवेदपि नृणां कस्यानुभूतौ कथा'' ।। इति**

जातकादेशमार्गेऽपि -

**''सौम्याः शुभानि खलु भावफलानि कुर्युरन्यानि हन्युरपरे विपरीतमेव ।**[9]
**एकग्रहस्य तु शुभाशुभकारकत्वे प्राप्ते ह्ययं बलयुतः शुभदोऽन्यथान्यः'' ।। इति ।**

भावफलचिन्तनोपक्रमे विशेषः निरूप्यतेऽधुना । शुभाशुभयोस्सदृशे तयोः द्वयोः फलयोर्नाशं विचिन्तयेत्। अस्य अयम् आशयः। शुभाशुभफलयोयद्यधिकं शुभमशुभं वा तत् परिपच्यते अनुभूयतेति। कारणबहुत्वाद्वा तस्य गौरवाद्वा आधिक्यम्। एतदुक्तं भवति। नैसर्गिकदशान्तर्दशाविदशाराशिफलभावफलयोगफलदृष्टिफलाष्टकवर्गफल-होरादिवर्गफलप्रत्यब्दमासद्युनिशाफलादिभेदैः शुभाशुभफलविपाकः विचिन्तनीयः अनुभववेद्यश्च। तेषु शुभाशुभफलेषु शुभाशुभयोः साम्ये तयोः फलयोरभावः यस्याधिक्यं तस्य पाकः परिकल्पनीयः। उदाहरणार्थं यथा मेषलग्ने जातस्य कश्चित् पुरुषस्य कुजो लग्नाधिपः। अष्टमाधिपतिश्च। तस्मिन् पञ्चमस्थे लग्नाधिपतित्वात् शुभफलं अष्टमाधिपतित्वादशुभफलं वा वाच्यमिति चेदाह। यद्यधिकं अधिकमिति **''अव्ययं विभक्तिसमीप''** इति विभक्त्यर्थे अव्ययीभावसमासः। के इत्यर्थः। 'क' इत्यक्षरसंख्यया एकं भवति। अतः के इत्यस्य लग्ने इत्यभिप्रायः। यत्फलं लग्ने सम्भवति लग्नाधिपत्येन तत्सम्भवति तत्परिपच्यते। एवं कुजस्य लग्नाधिपतित्वेन अपत्यप्राप्तिरूपशुभफलमेव वाच्यं भवति। न त्वष्टमाधिपत्यकृतदुष्टफलम्। एवमेव वृषलग्नेप्रजातस्य कश्चित् पुरूषविशेषस्य शुक्रस्य लग्नाधिपते शुभफलमेव प्रवक्तव्यम्। न तु षष्टाधिपत्यकृतदुष्टफलम्' एवं बहुधा परिपाकाः शुभाशुभफलानि विभज्य निर्णेतव्यानि।

तदुक्तं यथा -

**''एकग्रहस्य सदृशे फलयोर्विरोधे नाशं वदेद्यधिकं परिपच्यते तत् ।[10]**

**नान्यो ग्रहः सदृशमन्यफलं हिनस्ति स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः''।। इति ।**

नन्वेवं सति यत्र क्वचित् पापग्रहाः बलयुताः शुभवर्गसंस्थाः तदानीं तेषां सुतरां पापत्वं परित्यज्य तेऽपि कदाचित् शुभाः भवेयुः, किञ्च निसर्गतः शुभाः सन्तोऽपि तेषां कथं पापत्वमनुक्तमपि सिध्यतीति प्रदर्शयति। उक्तं च -

**''पापग्रहाः बलयुताः शुभवर्गसंस्थाः सौम्याः भवन्ति शुभवर्गगसौम्यदृष्टाः ।[11]**

**प्रायेण पापगणगा विबलाश्च सौम्याः पापाः भवन्त्यशुभवर्गगपापदृष्टाः''।। इति ।**

भावफलचिन्तनप्रविधौ बहुधा वैमत्यं दृश्यते विपश्चित्सु। नन्वेवं सति भावफलसिद्धिः कथमनुमेयः? चेदुच्यते- भावेशः, तद्भावे विद्यमानः, तद्भावदर्शीश्चेति ग्रहत्रयैः भावस्वभावगुणाश्च विचिन्तनीयाः सन्ति। भावसम्बन्धीफलानुभूतिः यदा लग्नेशभावेशयोः गोचरवशात् समागमो भवति यद्वा लग्नेशभावेशयोः दशान्तर्दशायां तद्भावफलानुभूतिर्वाच्या। उदाहरणार्थं कस्यचिद् जातके गोचरवशाद् लग्नाधिपतेः लाभेशेन समागमे जाते सति धनप्राप्तिर्भवति। एवमत्र लग्नाधिपतिषष्टाधिपत्योश्च यद्योगः गोचरवशाद् सम्पद्यते तदानीं रोगः शत्रुबहुलतायाश्च विवक्षितत्वेन ग्रहणप्रसङ्गः प्रसज्यते एव।

उक्तं च -

**''भावेशभावगतभावनिरीक्षकैस्ते भावस्वभाववपुरादिगुणाश्च चिन्त्याः ।[12]**

**भावानुभूतिरिह भावविलग्नपत्योः सम्बन्धतो भवति चारवशाद्दशादौ''।। इति ।**

प्रश्नमार्गेऽपि -

**''यस्य यस्य विलग्नेन सम्बन्धो लग्नपेन वा ।[13]**

**दृग्योगकेन्द्रगत्याद्यैः स स भावोऽनुभूयते''।। इति ।**

पुनर्भावफलसिद्धिं वक्तुकामः भावेशस्य संस्थितिः शुभराशौ, तस्मिन् भावे विद्यमानः शुभग्रहः यद्वा भावाधिपतेः मित्रेण संवीक्ष्यमाणः, भावकारकखेचरः बलान्विते सति विवक्षितभावफलस्य संसिद्धिं विचिन्त्यमति निरूपयति।

उक्तं च -

**भावे शुभर्क्षे शुभनाथमित्रैर्युक्ते बलाढ्यैरवलोकिते वा ।**

**भावाधिपे कारकखेचरे वा बलान्विते सिद्धिमुपैति भावः''।।[14]**

**''पापारिरन्ध्रेशसमेतदृष्टेष्वेतेषु विद्यादिह भावनाशम् ।[15]**

**बलान्वितेष्वेषु शुभेशमित्रैरयुक्तदृष्टेषु च भावलाभः''।। इति ।**

प्रश्नमार्गेऽपि -

**''भावाधीशे च भावे सति बलरहिते च ग्रहे कारकाख्ये**

**पापान्तःस्थे च पापैररिभिरपि समेक्षिते नान्यखेटैः''।।[16]**

**"पापैस्तद्बन्धुमृत्युव्ययभवनगतैस्तत्रिकोणस्थितैर्वा**
**वाच्यास्तद्भावहानिस्फुटमिह भवति द्वित्रिसंवादभावात्"।। इति ।**

इत्थं दिङ्मात्रं भावसम्पन्नतायाः विषये भिन्नभिन्नरीतिं सोपपत्तिकं प्रदर्श्य साम्प्रतं भावकारकेणाऽपि तत्तद् भावसम्बन्धिशुभाशुभफलचिन्तनं कुर्यादिति ब्रूते। अत्र भावकारको नाम भावेन चिन्त्यमाणक्रियायाः जनकत्वं कारकत्वमिति लक्षणं सुतराम् अस्माभिराश्रयणीयम् भवति। विलग्नाद् द्वादशभावानां कारकग्रहाः विहिताः इमे सन्ति। तनुभावस्य सूर्यः, द्वितीयभावस्य गुरुः। तृतीयभावस्य कुजः, चतुर्थभावस्य चन्द्रबुधौ। पञ्चमभावस्य गुरुः। षष्टभावस्य शनिकुजौ। सप्तमस्य शुक्रः। अष्टमस्य शनिः। नवमभावस्य गुर्वादित्यौ, कर्मभावस्य सूर्यबुधगुरुशनयश्च। लाभभावस्य गुरुः। व्ययभावस्यशनिश्चेति। इमे कारकाः सन्ति द्वादशभावानाम्।

तदुक्तं यथा -

**"द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ गुरुरिनतनयारो भार्गवो भानुपुत्रः।**[17]
**दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः सुरगुरूरिनसूनुः कारकाः स्युर्विलग्नात्"।। इति।**

भावकारकव्यापारेण भाव्यमानः ग्रहः भावस्य द्विद्वादशे, भावतश्चतुर्थाष्टमे भावात् त्रिकोणे च पापग्रहैः संयुते सति तद्भावस्य नाशं कुरुते। कारकात् विशेषतः समादिशेत् - इति शब्दप्रयोगेण भावचिन्तनप्रसङ्गे अयं विषयः अत्यन्तं महत्वं भजतेति विभावनीयः। एवं च पूर्वोक्तस्थाने तद्वैपरीत्ये नाम शुभग्रहाणां संयुतिवशाद् तद्भावस्य अभिवृद्धिं कामयेदिति भावः।

तदुक्तं यथा -

**"पार्श्वद्वयस्थैश्चतुश्रगैर्वा त्रिकोणगैर्वा सकलैश्च पापैः ।**
**भावस्य नाशं शुभदैश्च वृद्धिं समादिशेत् कारकतो विशेषात् ।। इति ।**[18]
**पापेन पत्या बलिना समेते दृष्टे च भावे सति दुष्टभावः ।**
**तेनाबलेनात्र युते च दृष्टे कृच्छ्राद्भवेत्कुत्सितभावलाभः"।। इति ।**

उक्तं च लघुजातकेऽपि

**"अधिपतियुतो दृष्टो वा बुधजीवनिरीक्षितश्च यो राशिः ।**
**स भवति बलवान्न यदा युक्तो दृष्टोऽपि वा शेषैः"।। इति ।**[19]

एवमत्र पुनर्भावस्य पुष्टिहान्योः कारणं विवदमानो आचार्यः निरूपयति। यस्य कस्यचिद् भावस्य स्वामेः लग्नाधिपतिना योगः भावस्योपरि लग्नाधिपतेःदृष्टिः तस्यैव लग्नपतेः केन्द्रत्रिकोणे च भावेशो विलसति सति तद्भावफलस्य शुभं विजानीयात्। भावेशात् षष्टद्वादशाष्टमानामन्यतमे भावे कस्यचिदेकस्य योगः दृष्टिसम्बन्धो वा आहोस्वित् पूर्वोक्त त्रिकस्थानाधिपतीनां केन्द्रे त्रिकोणे च भावेशः व्यवस्थिते सति भावफलस्य हानिर्वाच्या भवति। तत्रापि लग्नलग्नेशसम्बन्धात् तद् भावानुभवो सम्भवति। उदाहरणार्थं लग्नाधिपतिः चतुर्थे चतुर्थाधिपतिश्च लग्ने स्यात् यद्वा तयोः द्वयोरपि परिवर्तनयोगो वा स्यात्तदा चतुर्थभावसम्बन्धीफलविशेषं विशेषतश्चिन्तनीयः। एवमेव उदाहरणार्थं पञ्चमाधिपतिः षष्टे षष्टाधिपतिश्च पञ्चमे विद्यमाने सति अपत्यस्य रोगः यद्वा अपत्येन वैरभावश्च कल्पनीयः।

तदुक्तं यथा -

**‘‘सर्वत्र लग्नेश्वरयोगदृष्टिकेन्द्रत्रिकोणोपगतत्वमिष्टम् ।**
**षष्टाष्टमान्त्येश्वरयोगदृष्टयाद्यन्योन्यबन्धस्त्वशुभः प्रदिष्टः ।।**[20]
**‘‘लग्नलग्नेशसम्बन्धात्तद्भावानुभवः स्मृतः ।**
**सम्बन्धात्पुनरन्येषां तादृशं फलमादिशेत् ।।’’ इति ।**[21]

उक्तश्च मन्त्रेश्वरेण -

**‘‘लग्नेश्वरो यद्भवनेशयुक्तो यद्भावगस्तस्य फलं ददाति ।**
**भावे तदीशे बलभाजितेन भावेन सौख्यं व्यसनं बलोने’’ ।। इति ।**[22]

उक्तं च जातकपरिजातेऽपि -

**‘‘यद्भावनाथो रिपुरिष्फरन्ध्रे दुःस्थानयो यद्भवनस्थितस्तु ।**
**तद्भावनाशं कथयन्ति तज्ज्ञाः शुमेक्षितश्चेत् फलमन्यथा स्यात्’’।। इति ।**[23]

अत्र भावानां फलचिन्तनप्रसङ्गे इयम् एका आशंका उदेति यत् द्वादशभिर्भावैस्सर्वैः शुभाशुभं निरूपणीयमित्युच्यते। द्वादशभावानां साधनविधौ तदाद्यन्तावगमाय निरन्तरयोरूभयोर्भावयोर्योगं विधायाऽर्धितं यावद्राश्याधिकप्रदेशे तयोस्सन्धिः। पूर्वस्यान्तः उत्तरस्यादिश्च भवति। तत्र स्थितो ग्रहः उभयभावानामाश्रयणादफलः। भावसन्धेरूनो ग्रहः पूर्वभावगतमधिकं उत्तरभावगतं फलं प्रयच्छति।

तथा चोक्तं जातकद्धतौ -

**‘‘वदन्ति भावैक्यदलं हि सन्धिस्तत्र स्थितस्यादफलो ग्रहेन्द्रः ।**
**ऊनस्तु सन्धेर्गतभावजातमागामिजं चाभ्यधिकं करोति ’’।। इति ।**[24]

एवं भावकल्पनया ग्रहाणामेकराशिगतानामपि भावभेदात् फलभेदस्स्यात्। भिन्नराशिगतानामप्येकभावाश्रयणात् फलैक्यं स्यात्। तत्रेदं समाधानम् - लग्नस्य येंऽशाभ्युदिताः तत्संख्येषु स्थितो ग्रहः लग्नाद्भावफलं विधत्ते। तानतीतो द्वितीयजं भावफलं प्रयच्छति। एवं शेषेषु स्थानेषु चैव एवैवं फलं प्रकल्पयेत्।

तथा च नारदः -

**‘‘लग्नस्य येंऽशाभ्युदिताः तत्संख्येषु स्थितो ग्रहः ।**
**लग्नाद्भावफलं दत्ते तानतीतो द्वितीयजम् ।।**
**फलं स्थानेषु शेषेषु चैवमेव प्रकल्पयेत्’’।। इति ।**[25]

भावरम्भादुक्रम्य क्रमादुपचीयमानं फलं भावमध्ये पूर्णं स्यात्। तस्मात् क्रमेण क्षीयमाणं, भावान्ते शून्यं भवतीति। भावफलं भावमध्यसमे ग्रहे पूर्णं स्यात्। तदूने तदधिके च त्रैराशिकेन फलं प्रकल्पयेत्।

उक्तं च श्रीपतिना -

**‘‘भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भावसमांशकेषु ।**
**ह्रासक्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनीन्द्रैः ।।**
**भावांशतुल्यः खलु वर्तमानः भावोद्भवं पूर्णफलं विधत्ते ।**
**भावोनकेचात्यधिके च खेटैः त्रैराशिकेनात्र फलं प्रसाध्यम् ।।’’ इति ।**[26]

फलदीपिकाकारोऽपि श्रीपत्युक्तमेव अनुमन्यते, तदुक्तं तेन -

**''भावेषु भावस्फुटतुल्यभागस्तद्भावजं पूर्णफलं विधत्ते ।**
**सन्धौ फलं नास्ति तदन्तराले चिन्त्योऽनुपातः खलु खेचराणम्''।। इति ।**[27]

ननु राशिभावयोरभेदात् भावस्यापि राशिवत् फलकल्पना कुतो न स्यात्, एवं मन्यते, राशीनामेकैकग्रहाधिपत्यनियमात् सुकरः फलादेशः। भावानां तु तथाऽऽधिपत्यनियमाभावात् फलादेशो दष्करस्स्यात्। तथा हि - कदाचिद्राशिद्वयव्यापिनो लग्नादेरेकैकस्य भावस्य तद्राशिदृयस्याधिपती द्वावप्याधिपत्यमभिलषतः। कदाचिदाद्यराश्यधिपतिरेव न तथेष्यते। भावमध्ये फलं सम्पूर्यत इत्यत्र तु यस्मिन् राशौ भावमध्यं स्यात् तद्राश्यधिपतिरेव भावाधिपतिरिति सुकरः फलादेशः। तस्मादिदमेव श्रेयः मार्गेति प्रतिभाति। यद्यपि भावफलचिन्तनोपक्रमे शुभाशुभफलं षड्विधं प्रोक्तम् - ग्रहजं, भावजं, राशिजं, ग्रहभावजं, ग्रहरश्मिजं, योगजं चेति। तत्र स्वातन्त्र्येण ग्रहैर्दीयमानं ग्रहजं तथा भावैर्भावजं, राशिभीर्राशिजम् तथा ग्रहैर्भावनिबन्धेन दीयमानं ग्रहभावजं, ग्रहैराशिबन्धनेन दीयमानं ग्रहराशिजं, ग्रहैः राशिभावनिबन्धनं दीयमानं योगजमिति। इत्थं भावस्य षड्विधं फलं बलाबलविवेकेन विमर्शनीयो भवति।

भावे संस्थितस्य खेटस्य दशाफलचिन्तनरीतौ दशाधिनाथस्य गुणवशाद् गुणस्योत्कर्षः योजनीयः। तत्रापि मूर्त्यादिभावेषु यत्र सौम्यः तस्य भावस्योपचयं यत्र पापाः तस्य भावस्य विपत्तिः वाच्या। **'विपरीत रिःफ षष्टाष्टमेषु'** इत्युक्तत्वात् त्रिकभावानां सुतरां पापत्वमभिहितम्। तत्राऽपि आचार्याणां मतेन अष्टमव्यययोर्मध्ये सर्वे नेष्टाः। षष्ठे शुभाः शत्रुनाशकाः स्युः।

उक्तं च स्वल्पजातके -

**''पुष्णन्ति शुभा भावान् मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः ।**
**सौम्याः षष्टाऽरिघ्नाः सर्वेऽरिष्टा व्ययाष्टमगाः'' ।। इति ।**[28]

एतानि फलानि विशिष्य दशायां योजनीयानि। **'यद् भावस्थो अष्टमपः तद् भावो नश्यते न सन्देहः'** इति वचनात् अत्यन्तमशुभमष्टमम्। मरणस्थानत्वात् तत्पतिरष्टमेशेन युते दृष्टे भावो नाशं व्रजति। त्रिकभावस्य स्वामिषु कस्य कीदृशं फलमिति दिङ्मात्रम् अत्र प्रोच्यते। तत्र षष्टभावस्याधिपः रोगं शत्रुभयं च करोति। अष्टमेशः मृत्युभयं प्रददाति। व्ययाधीशो स्थानभ्रंशं दरिद्रतां च प्रयच्छति। त्रिकभावपानां योगेक्षणादपि प्रारब्धा दशा विशेषात् अशुभदो भवतीति अधस्थनश्लोकस्य परिशीलनेन तत्त्वमनुक्तमपि सिध्यति।

तदुक्तं यथा -

**''आरातिरोगाद्यमरातिनाथो मृतश्चिरो मृत्युभयं करोति ।**
**व्ययाधिपो भ्रंशदरिद्रताद्यं योगेक्षणाद्यैरशुभो विशेषात्''।। इति ।**[29]

उक्तं च प्रश्नमार्गेऽपि -

**''षष्टं द्वादशमष्टमं च मुनयो भावान्ऽनिष्टान् विदुः**
**तन्नाथान्वितवीक्षिता यदधिपाः ये वा च भावा स्वयम् ।**

**तत्रस्थाश्च यदीश्वरास्त्रय इमे नश्यन्ति भावा नृणाम्**

**जाता वा विफला विनष्टविकलास्तत्राऽतिकष्टोऽष्टमः''॥ इति।**[30]

एवमत्र विवक्षितार्थस्य प्रतिपादनाय लग्नादितत्तद्भावेषु गोचरवशाद् तत्तद्भावतः अष्टमाधिपतिः आहोस्वित् शनिः तत्तद्भावे सञ्चरणकालः समागते सति, यद्धा तत्तद्भावतः षष्टाऽष्टद्वादशभावाधिपानां, षष्टाष्टमद्वादशे स्थितानां च दशाभुक्तिरपि जातके समागते सत्यपि तत्तद्भावो विनष्टो भवतीति इदमाख्याति।

तुदक्तं यथा -

**''मूर्त्याद्याः निजरन्ध्रपेन शनिना वा स्युर्यदा संयुताः**

**स्वस्वारिव्ययरन्ध्रपापहृदयतस्थस्य वा चेत्तदा।**

**तत्तद्भावविपत्तिरस्ति नियमादेवं वराङ्गादिषु**

**ब्रूयादंघ्रियुगान्तिमेषु च वपुर्भागेषु रोगान् सुधीः''॥ इति।**[31]

ननु यत्र क्वचित् ग्रहाणाम् अंशकं बलमिति यद् वचनमुच्यते, तन्निरर्थकं स्यादिति चेत् - मैवम्, यतः भावाधिपतिः यस्य नवांशे विधमानः, स च यस्य ग्रहस्य नवांशे पतति, तस्य नवांशाधिपतेः प्राबल्ये सति भावफलस्य पुष्टिः। नवांशस्य दुर्बलत्वे सति भावस्य हानिः सुसङ्गतमेव। तेन भावस्यापि प्राबल्यदौर्बल्ये साक्षात् सिध्यतः। तदनेन पद्येन स्पष्टं भवति -

**''भावेशभुक्तांशसमानसंख्या भावास्तदीशेशगुणान्विताः स्युः।**

**तैर्दुर्बलैर्भावविनाशमाहुर्बलान्वितैस्तैरपि भावसिद्धिम्'' ॥ इति।**[32]

**''शुभदानां प्राबल्ये शुभपौष्कल्यं पुनस्तु दोषकृताम्।**

**दौर्बल्ये दोषाणां पौष्कल्यं वदति तद्वदभियुक्तः''॥ इति।**[33]

भावस्यबलवशादेव सर्वत्र फलनिर्देशः। उदाहरणार्थं कर्मभावाधिपतिः स्वोच्चगश्चेत् उत्कृष्टवृत्या जातो जीवति। सैव नीचगश्चेत् नीचवृत्या आजीविकां निर्वहति। द्रव्याण्यपि तथाविधानि उच्चगतश्चेदयत्नेन सिध्यन्ति। नीचराशिगतश्चेत् यत्नेन सिध्यन्ति।

एवमत्र ग्रहभावजफलविमर्शनोपक्रमे तत्तद्भावप्राबल्यदौर्बल्यवशेन भावफलसिद्धिं कथं विभावयेदित्याह- तत्र यस्मिन् भावे भावेशः व्यवस्थितः, भावाधिपतेर्नवांशराशिः, तद्भावकारश्चेति त्रयाणाम् अन्यतमे राशौ चारवशात् त्रिकोणे च पूर्वाक्तेषु कश्चिदेकः समागते सति तत्तद्भावाः सफलाः भवन्तीति निर्दिशेत्। तत्रापि विशिष्य तत्तद्ग्रहस्य अन्तर्दशाकाले अन्तर्दशापतेः क्षेत्रे एव भास्करो सञ्चरिष्यति यद्वा विलसति तदा प्रोक्तदशायाः फलं निश्चयेन प्राप्यते। तदुक्तं यथा -

**''भावे तदीशस्थितभांशके वा तेषां त्रिकोणे च यदा चरन्ति।**

**लग्नेशभावाधिपकारकाख्यास्तदा तु भावाः सफलाः भवन्ति॥ इति।**[34]

**अन्तर्दशाधिपे क्षेत्रे वर्तते भास्करो यदा।**

**तस्मिन् काले दशाप्रोक्तफलं भवति निश्चितम्''॥ इति।**

अत्र उदाहरणार्थं कस्यचिद् पुरूषविशेषस्य कृते साम्प्रतं कुजस्य अन्तर्दशा प्रचलिष्यमाणा वर्तते। कुजस्य

क्षेत्रे मेषवृश्चिकौ स्तः। यदा भास्करः मेषवृश्चिकयोर्मध्ये कयोश्चिद्येकस्मिन् राशौ चारवशात् परिभ्रमति तदा कुजस्य अन्तर्दशायाः फलं सम्यक् प्रयच्छति। पुनरन्यदेकम् उदाहरणं भवतां पुरस्तात् प्रयच्छामि-काल्प्यताम्, कश्चिदेकस्य पुरूषविशेषस्य गुरोरन्तर्दशा अद्यत्वे प्रचलिष्यमाणा अस्ति। गुरोः स्थाने धनुर्मीनौ स्तः। यदा गोचरवशात् सूर्यः धनुर्मीनयोर्मध्ये कस्यचिदेकस्मिन् राशौ प्रविष्टो भवति गुरोरन्तर्दशायाः फलं वयं अवश्यं प्रविलोकयितुं प्रभवामः।

पुनर्भावस्य दौर्बल्यं प्रकटयितुं निगदति। विचार्यमाणभावस्य भावेशः यस्मिन् राशौ विलसति तद्राशेः अष्टमाधिपतिः, मान्दिराराशेरधिपः यद्वा खरद्रेक्काणधिपश्चेति (तद्भावमध्यतः 22 तमो द्रेक्काणाधिपः) त्रिषु कश्चिदेकः तस्मिन्नेव राशौ गोचरवशाद् सञ्चरिष्यति तदा तद्भावस्य नाशं प्रकरोति।

उक्तं च -

**''यदा चरन्ति तत्रैव रन्ध्रपो मान्दिभेश्वरः।**

**खरद्रेक्काणपोवाऽपि भावनाशस्तदा भवेत्''॥ इति।**[35]

भावस्य शुभफलपरिशीलनार्थं कालनिर्देशः प्रकारान्तरेणाऽपि कर्तुं शक्यते। तद्यथा - भावेशः यस्मिन् राशौ विद्यमानः आहोस्वित् यस्य राशेर्नवांशे व्यवस्थितः तद्राशितः त्रिकोणे गुरोः भ्रमणं स्यात्तदा तद्भावस्य शुभफलं समादिशेत्।

एवमत्र लग्नाधिपति अभीष्टभावाधिपत्योः ग्रहस्फुटैक्ये कृते ऐक्यवशाद् लब्धराश्यंशकलातः कः नवांशेति संगणय्य ततस्त्रिकोणे (नवमपञ्चमस्थाने) यदा गोचरवशात् गुरूः सञ्चरति तद्भावसम्बद्धशुभफलप्रसक्तिः सुसङ्गतमेवेति बोध्यम्।

पुनरन्यविधिनाऽपि भावशुभफलं निर्णेतुमुपायः उक्तः -

लग्नेशभावेशभावकारकाणां त्रयाणमपि ग्रहस्फुटैक्यं कुर्यात्। तत्र लब्धयोगराशेः अंशस्य च प्रमाणं कीयदिति संगणय्य गोचरवशात् तस्मिन् स्थाने देवगुरोः सञ्चारः यदा सम्भवति तदा तद्भावस्य शुभफलकथनं सयुक्तिकमेव।

उक्तं च -

**''जीवे तु भावाधिपयुक्तभांशत्रिकोणसंस्थे सति भावलाभः।**

**लग्नेशभावाधिपतिस्फुटैक्यभांशत्रिकोणोपगते च तद्वत्॥ इति।**[36]

**यद्वा लग्नेशभावेशकारकाणां स्फुटैक्यभम्।**

**यदा गच्छन्ति देवेढ्यस्तदा भावाप्तिरूच्यते''॥ इति।**

मन्त्रेश्वरेणाऽपि इदम् अनुमन्यते। तदुक्तं तेन -

**''यद्भावेशस्थितर्क्षांशत्रिकोणस्थे गुरुर्यदा।**

**गोचरे तस्य भावस्य फलप्राप्तिं विनिर्दिशेत्''॥ इति।**[37]

ननु नैतेषां ग्रहभावजप्राबल्यदौर्बल्यनियामकत्वं युज्यते। बलतारतम्ये सत्यपि भावभावेशभावकारकाणां मध्ये भावदो ग्रहस्य दशागमे सति तद्भावसिद्धिं प्रवक्ष्येदिति निर्देशस्य कथमत्र सङ्गतिः ? चेदुच्यते - भावभावेशभावकारकाणां मध्ये भावदो ग्रहस्यैव प्राधान्यम्। न तु अन्येषाम्। तद्धाशागमे सति भावसिद्धिः सम्भाव्यते

एव। विमर्शकेषु केचिद्विपरिचत्सु अस्मिन् विषये मतिभेदो वर्तते। कल्याणवर्मणाऽपि इदम् अनुमन्यते। तथापि ईषद्भिन्नत्वमस्तीति अयं विषयः न विस्मर्तव्यः। तदुक्त यथा -

**राशेस्तदीश्वरस्य च बलेन परिकल्प्यमृक्षभेदफलम्।**
**युगपत्फलोपलब्धेरवधृतिरेकस्य कर्तव्या॥ इति।**[38]

भावभावेशभावकारकेषु यस्य कस्यचिद् ग्रहस्य नवांशे व्यवस्थितः तद्ग्रहस्य नवांशाधिपतेर्दशायां तद्भावसिद्धिर्भवति। उदाहरणार्थं विवाहकर्त्रकयोगचिन्तनक्रमे सप्तमभावस्य नवांशः यत्र पतति तद्भास्याधिपतेर्दशायां तद्भुक्तौ वा, सप्तमेशः यस्मिन् नवांशे व्यवस्थितो वर्तते तद्ग्रहस्य दशान्तर्दशायां वा, सप्तमभावकारकः यस्मिन् नवांशे स्थितः तद्दशान्तर्दशायां वा विवाहस्य सम्भवो अनुमेयः। तदुक्तं तेन -

**''भावभावपतिकारकेषु यो भावदो भवति तद्दशागमे।**
**तद्युक्तांशपदशागमेऽथवा भावसिद्धिरिति केऽपि सूरयः''॥ इति।**[39]

एवं भावग्रहाणां च गुणदोषौ विचिन्तनीयौ। प्रसङ्गेऽस्मिन् ग्रहाणां माहात्म्यप्रदिपादकं पद्यमेकं विद्वद्भ्य उपायनीक्रियते। तद्यथा -

**''ग्रहाधीनं जगत्सर्वं ग्रहाऽधीनाः सदाऽमराः**
**कालज्ञानं ग्रहाधीनं ग्रहाः कर्मफलप्रदाः।**[40]
**सृष्टिरक्षणसंहारी सर्वेशोऽपि ग्रहानुगः**
**कर्मणां फलदातारः सूचकाश्च ग्रहाः सदा'' ॥ इति।**

इत्थं भावजफलचिन्तनविधौ प्राबल्यदौर्बल्यसमीक्षेति विषयस्य समासतः निरूपणं कृतमिति शम्।

**सन्दर्भाः -**


1. प्र.मा.अ. 1 श्लो.सं. - 11
2. प्र.मा.अ. 1 श्लो.सं. - 9
3. श्री.प.अ 1 श्लो.सं. - 2
4. बृ.जा.अ. 1 श्लो. सं. - 15
5. बृ.जा.अ. 1 श्लो. सं. - 16
6. बृ.जा.अ. 1 श्लो. सं. - 6
7. जा.मा.अ. 10 श्लो.सं. - 1
8. प्र.मा.अ. 14 श्लो.सं. - 39
9. जा.मा.अ. 10 श्लो.सं. - 2
10. बृ.जा.अ. 8 श्लो.सं. - 23
11. जा.मा.अ. 10 श्लो.सं. - 3
12. जा.मा.अ. 10 श्लो.सं. - 4
13. प्र.मा.अ. 14 श्लो.सं. - 43
14. जा.मा.अ. 10 श्लो.सं. - 5
15. जा.मा.अ. 10 श्लो.सं. - 6

16. प्र.मा.अ. 14 श्लो.सं. - 30
17. जा.पा.अ. 2 श्लो.सं. - 51
18. जा.मा.अ. 10 श्लो.सं. - 7
19. ल.जा.अ, 1 श्लो. सं. - 14
20. जा.मा.अ. 10 श्लो.सं. - 9
21. जा.मा.अ. 10 श्लो.सं. - 10
22. फ.दी.अ.सं. 15 श्लो सं. 27
23. जा.पा.अ. 11 श्लो. सं. 4
24. श्री.प.अ. 1 श्लो. सं. - 8
25. वि.मा.पृ.सं. - 23
26. श्री.प.अ. 1 श्लो. सं. - 10-9
27. फ.दी.अ.सं. 15 श्लो सं. 14
28. ल.जा.अ. 11 श्लो सं. - 4
29. जा.मा.अ. 10 श्लो. सं. - 11
30. प्र.मा.अ. 14 श्लो. सं. - 29
31. प्र.मा.अ. 14 श्लो. सं. - 49
32. जा.मा.अ. 10 श्लो. सं. - 17
33. प्र.मा.अ. 14 श्लो. सं. - 35
34. जा.मा.अ. 10 श्लो. सं. - 18
35. जा.मा.अ. 10 श्लो. सं. - 19
36. जा.मा.अ. 10 श्लो. सं. - 21, 22
37. फ.दी.अ. 16 श्लो. सं. - 32
38. सा.व.अ. 05 श्लो सं. - 19
39. जा.मा.अ. 10 श्लो. सं. - 30
40. वि.मा.पु.दी.टी.पृ.सं. - 550

**परिशीलितग्रन्थाः**


(1) प्रश्नमार्गः
(2) श्रीपतिपद्धतिः
(3) बृहज्जातकम्
(4) लघुजातकम्
(5) जातकादेशमार्गः
(6) विद्यामाधवीयम्
(7) फलदीपिका
(8) जातकपरिजातम्
(9) सारावली



*विभागाध्यक्षः, ज्योतिषविद्याशाखाः*
*केन्द्रीयसंस्कृतविश्वविद्यालयः*
*जयपुरपरिसरः, जयपुरम्*

# स्वातन्त्र्यसङ्ग्रामे स्वामिविवेकानन्दस्य योगदानम्

प्रो. सत्यम् कुमारी



**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानं ह्यधर्मस्य तदात्मानं सृजाम्यहं॥**[1]

गीतायाः कथनानुसारे समये-समये महापुरुषाः समवतीर्य वसुधायाः भारतपहृत्य सुखशान्तीच स्थापयन्ति। आध्यात्मिक आदर्श एव हि भारतीयानां प्रशस्यतमा महानादर्शः। भारतीयजीवनस्य सर्वप्रधानं कर्त्तव्यं धर्मानुष्ठानं "एकं सद्विप्रा बहुधा वदन्ति"[2] इति वेदवाणी साम्प्रदायिकम् ऐक्यमुपदिशति। वेदस्तु अस्मान शिक्षयति यत् वयं सर्वे ईश्वरस्य प्रज्ञाः सः अस्माकं पिता अस्ति।[3] मनुष्यमात्रस्य धर्मः भवति यत् सः सर्वेषां रक्षा कुर्यात्।[4] अस्मिन् भारतवर्षे देशे काले काले सत्यवादिनः आदर्शस्वरूपाः समग्र विश्वस्य हितैषिणी महापुरुषा अजायन्त। एतेषां महापुरुषाणां ज्ञानजयोतिः सर्वत्र प्रसारिता सञ्जाताः। अतएव भारतमिदं विश्वगुरूरूपेण प्रसिद्धम्।

विलक्षणप्रतिभासम्पन्नः स्वामिविवेकानन्दः स्वाध्यात्मिकज्ञानेन मानवजातिं नूतनमार्गं प्रदर्श्य भारतस्य गौरवं वर्धितवन्तः। स्वामिविवेकानन्दाः अध्यात्मज्ञानबोधकाः जनकल्याणं प्रतिसर्वदातत्पराः किञ्च पाश्चात्यदेशस्य आधुनिकबुद्धिवादं प्रतिविरोधिनः नैवासन् स्वामिविवेकानन्दस्य जन्म बङ्गालप्रान्तस्य कलकत्ता नगरे जनवरी मासस्य द्वादशदिनाङ्के 1863 तमे वर्षे अभवत्। बाल्यकाले एतेषां नाम नरेन्द्रदत्तः आसीत्। पिता श्रीविश्वनाथदत्तः कलकत्ता उच्च न्यायालये अधिवक्तृरूपेण कार्यं करोति स्म। एते स्वतीक्ष्णबुद्ध्या ज्ञानेन उदारमनसा परोपकारभावेन च दरिद्राणां साहाय्यं अकुर्वन्। अस्य माता श्रीमतिभुवनेश्वरीदेवी धर्मपरायणा परोपकारिणी चासीत्। एवे पित्रो प्रभावेण बहुप्रभाविता आसन्। एतेषां बाल्याकालादेव ईश्वरार्चनादि कर्मणि रूचिः दृश्यते समः। अनेन प्रभावेण एव नरेन्द्रनाथदत्तः इति स्वनाम विहाय विवेकानन्दः सञ्जातः। एषः श्रीरामपरमकृष्णहंसस्य शिष्यः आसीत्। भारतस्य दार्शनिकात्मनः यथार्थनैष्ठिकं प्रतिनिधित्वं रामकृष्णेनैव कृतम्। तस्यकालः महासंक्रमणस्य काल आसीत्। राजनीतिकपराजयेन भारतीयानां मानसे स्वकीयादर्शान् प्रति पूर्णाऽनास्था उत्पन्नाऽऽसीत्।

एतादृशे युगे राजाराममोहनरायदयानन्दातिरिक्तं स्वामिरामकृष्ण विवेकानन्दादिभिः महापुरुषैरूद्घोषितं यत् भारतीय वाङ्मये एकेश्वरवादस्य प्रतिष्ठाविद्यते। ईशावास्यमिदं मन्त्रोऽपि[5] एकमेव ईश्वरं उद्घोषयति। स्वामिविवेकानन्दस्य दृष्टिः सार्वभौमविश्वजनीना चासीत्॥ उक्तं च

**वसुधैवाऽस्ति कुटुम्बकश्च सततं विश्वं भवेत् सर्वदा।**
**संपश्यन्तु जनाः परस्परमहो मित्रस्य वै चक्षुषा॥**[6]

उक्तं च ईशावास्योपनिषदि

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।**
**तत्र कः मोहः कः शोकः एकत्वमनुपश्यतः॥**[7]

यदा समत्वभावना जागर्त्ति तदा मानवः स्वतः एव शारीरिक मानसिक बौद्धिकं च कर्म उत्साहितो भवति।

मानसिककर्म सङ्कल्पं तथा विवेकंमुत्पादयति, शारीरिककर्म मैत्री सहिष्णुताञ्च जनयति। बौद्धिकं कर्म ज्ञानं च समुत्पादयति। मनसो बुद्धेश्च स्वस्थत्वे जीवः मधुरभाषी भवति उक्तं च श्री कृष्णेन। स्वामिविवेकानन्दः एतस्यैव धारणायाः अनुसृत्यैव कथयन्तः आसन् यत् तथा नद्यः ऋजुकुटिलमार्गैः वहन्त्यः अन्ते अनन्तसिन्धौ आपतन्ति तथैव विविध सम्प्रदायाः धर्माश्चानन्ते विलीना भवन्ति। स्वामिविवेकानन्द स्वामिरामकृष्ण तीर्थयोः इदमेव साम्यमासीत् यत् उभौ महापुरुषौ विभिन्न दार्शनिक सम्प्रदायेषु समन्वयस्थापनाय प्रयासं कृतवन्तौ किन्तु विवेकानन्दः स्वपक्षान् प्रभावितर्कैः समर्थितवान यैः सोऽधिकः प्रभावशाली बभूव। तेन विश्वस्य अन्यधर्मैः सह वेदान्तस्य अविरोधः स्थापितः। तस्यानुसारं वेदान्तः तद्विशालजलधिवदस्ति यस्य वक्षःस्थले युद्धपोतः सामान्य पोतश्चोभौ समीपे स्थातुं शक्नुवन्तः। तदीया मान्यताऽस्ति यत् वेदान्तस्य द्वारं योगि भोगि नास्तिक मूर्त्तिपूजक-हिन्दु-मुस्लिम-ईशानुयायिनाञ्च सर्वेषां कृते अनावृत्तमस्ति। तदीया एषा उदारता समन्वयभावना च वेदान्तस्य इतिहासे अपूर्वा वर्तते। तदीयं कथनमासीत् यद्वेदान्तोद्देश्यं देशसेवया मानवसेवया चाभिन्नमस्ति। तेन समाजसेवायाः प्रबलसाधनरूपेण वेदान्तशास्त्रं प्रस्तुतम्। स स्वीकरोति यत् जीवः प्राणी च परमात्मनः स्वरूपं वर्तते तस्मात् परमात्मनः अनुसंधानं सर्वप्रमिं दुःखदरिद्रअसहाय प्राणिषु एव कर्त्तव्यम्। तदीया इयं व्यवहारिकी समाजवादिनी चावधारणा वेदान्त व्यवहारदृष्ट्या समाजसेवया च संयोजयति। ऋग्वेदे उक्तम् ''इन्दुः साधारणस्त्वम्।[8] ईश्वरः सर्वेभ्य समानः साधारणश्च, सर्वैरक्षायै तम् आह्वयन्ति। विश्वबन्धुतार्थम् अपेक्ष्यते परस्परं भ्रातत्व-भावना, सहानुभूतिः, सहयोगभावनाश्च, यदा एताः भावनाः संकीर्ण परिसरतः बहिरागत्य विश्वव्यापिन्यो भवन्ति।

भारतवासिनां समेषां शास्त्रनिबद्धानि तत्त्वरत्नानि यानि संस्कृतभाषायाः कठिननेन आवरणेन गुप्तभावेन रक्षितानि तानि सर्वसाधारणस्य बोधगम्यानि विधेयानि। शिक्षाकेन्द्रमन्दिरे शिक्षकः विश्वजनीनोदारधर्मनीतेः प्रचारं कुर्यात्। तादृशशिक्षायाः दीक्षितः प्रत्येको जनः प्रबलं विश्वासं स्थापयेत् यत् अनन्ताशक्तिः सर्वेषामेव हृदयमतिष्ठति, तया शक्त्यासन्नदाः सर्वेजनाः भारतं धर्मग्लानितः पुनरूज्जीवितं कुर्वन्तु। यावत् चेतसि तेजो विद्यते, तेज समुद्दीप्तश्च विद्यते भावः। तावदेव भारतिभिः सर्वैविश्वकल्याणकर्माणि आत्मनो नियोजनं कर्त्तव्यम्। अतः समग्रायामानवजातेः कल्याणाय आत्मबलिदानमेव अस्माकं श्रेष्ठं कर्मेति प्रतिभातं भवतु।

स्वामिविवेकानन्दमहर्षेः सविशेषं वक्तव्यम् संस्कृतशिक्षा नैव शास्त्रमात्रबद्धा, अपित्वस्माकं सामाजिके कर्मजीवने अस्याः प्रयोगो विधेयः। विवेकानन्दचरितामृतग्रन्थे उक्तम्-

**उत्तिष्ठत प्रजागृत निद्रां त्यजत बान्धवाः।**
**ऐक्यसूत्रे सुबद्धाः स्त कुरुध्वं शक्त्युपासनम्।**[9]

विवेकानन्दस्य समये देशे आंग्लजनानां शासनमासीत्। परतन्त्रतायाः हीनभावना सर्वेषां दुःखानां कारणं भवति अनेन एतादृशी शिक्षा प्रकल्पिता यया जनेषु राष्ट्रभावनायाः विकासं कृत्वा स्वतन्त्रतायै यत्नः कर्त्तव्यस्तेन सर्वेषु मानवेषु परमात्मनः दर्शनं भवति, अतः एषा भावना अवश्यमेव उत्पादनीया। तस्यमतमासीत् यत् भौतिकाभ्युदयानन्तरमेव आध्यात्मिकाभ्युदयः भवितुमर्हति, अतएव तेन स्वदार्शनिकविचारेषु भारतदेशस्य विविधसामाजिकसमस्यानां चिन्तनं कृत्वा तेषां समाधानं प्रकटितम्।

**सन्दर्भाः -**


1. श्रीमद्भगवद्गीता, 4-71
2. वेद-ऋग्वेद 1/164/46
3. शृण्वन्तु सर्वे अमृतस्य पुत्राः॥ ऋ.1-13-1
4. पुमान् पुमांस परिपातु विश्वतः॥ ऋ.6-75.14
5. ईशावास्यमिदं...............ईशावास्योपनिषद् 1/1
6. संस्कृति-21
7. ईशावास्योपनिषद-मन्त्र 711
8. ऋग्वेद 8.48.7
9. विवेकानन्दचरितामृतम्-8-20



*दर्शनविद्याशाखाध्यक्षा,*

*केन्द्रीयसंस्कृतविश्वविद्यालयः,*

*जयपुरपरिसरः, जयपुरम्*

# संस्कृतस्वातन्त्र्यवीरो लोकमान्यबालगंगाधरतिलकः

**प्रो. विष्णुकान्तपाण्डेयः**



**श्रीरामरामरामेति रमे रामे मनारमे।**
**सहस्रनाम तत्तुल्यं रामनाम वरानने।।**

मान्या मदीयं पत्रमिदं भागद्वये विभक्तमस्ति। तत्र प्रथमे भागे लोकमान्यबालगंगाधरतिलकस्य जीवनपरिचयः प्रतिपादितोऽस्ति। द्वितीये भागे च बालगंगाधरतिलकस्य जीवने गीताया रामायणस्य च प्रभावो वर्णितोऽस्ति।

मान्या लोकमान्यबालगंगाधरतिलकः, एकः भारतीयो राष्ट्रवादी, महान् शिक्षकः समाजपथप्रदर्शकः, महान् अभियन्ता एवं भारतीयस्वतन्त्रतासंग्रामस्य लोकप्रियो नेता आसीत्।

**जीवन परिचयः**

**जन्म** – 23 जुलाई 1856 तमे वर्षे महाराष्ट्रस्य रत्नागिरिनामके स्थानेऽभवत्।

**पितुः नाम** – गंगाधरपंततिलकोऽस्ति।

**मातुः नाम** – पार्वतीबाई तिलकोऽस्ति।

**पत्न्याः नाम** – सत्याभामा आसीत्।

**मृत्युः** – 1 अगस्त, मुम्बईनगरे, 1920 तमे वर्षेऽभवत्।

**राजनैतिकदलम्** – कांग्रेसपार्टी आसीत्।

1856-1920

**रचना** –

1. ओरियन-1893 तमे वर्षे
2. दी आर्कटिक होम इन दि वेद-1903
3. गीतारहस्यम्-1915

मान्या वयं जानीमो यत् 'स्वराज्यं मम जन्मसिद्धः अधिकारः' अस्ति, तमहमवश्यं स्वीकरिष्यामीति कथनम् लोकमान्यबालगंगाधरतिलकस्यैव अस्ति। अस्य विषये महात्मा गाँधी अवोचत् यदयं बालगंगाधरतिलकः आधुनिकभारतस्य निर्माता अस्ति। एतेषां विषये लाला लाजपतरायमहोदयोऽपि अवोचत् यद् अयं तिलकः अस्माकं भारतीयः गर्जकः सिंहः अस्ति। जवाहरलालनेहरुमहोदयश्च उक्तवान् यदयं लोकमान्यबालगंगाधरतिलकः भारतीय-आन्दोलनस्य जनकोऽस्ति। अयं गरमदलस्य नेता आसीत्। पश्चात् एतेषामेव विचारान् आदाय महात्मा गांधी स्वतन्त्रतायै संघर्षम् अकरोत्। स्वराज्यम्, स्वदेशी, स्वशिक्षा इत्येते विचाराः लोकमान्यबालगंगाधरतिलकस्यैव आसन्। अयं स्वतन्त्रताप्राप्त्यर्थं महत् संघर्षम् अकरोत्।

इदानीं रामायणस्य लोकमान्यबालगंगाधरतिलकस्योपरि प्रभावः प्रदर्श्यते।

भगवान् रामः सीतां प्रति स्ववनागमनस्य उद्देश्यं बोधयन्नाह –

**ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः।**

**मां सीते स्वयमागम्य शरण्यं शरणं गताः।।** (अ.एका. श्लोक.4)

अयं भावः-राम उवाच-सीते दण्डकारण्ये संशितव्रता मुनयः स्वयमागत्यः स्वयं मम शरणमागत्य उक्तवन्तो यत्- हे प्रभो अस्माकमुपरि अनुग्रहं कुरु । यतो हि रक्षांसि आगत्य अस्मान् तपस्विनो मुनीन् भक्षयन्ति। अतः रक्षां कुरु रक्षां कुरु।

भगवान् राम उवाच –

**मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम्।**

**कृत्वा वचनशुश्रुषां वाक्यमेतदुदाहृतम्।।7।।**

**प्रसीदन्तु भवन्तो मे ह्रीरेषा तु ममातुला।**

**यदिदृशैरहं विप्रैरुपस्थेयैरुपस्थितः।।8।।**

**किं करोमीति च मया व्याहृतं द्विजसन्निधौ।।9।।** (अ.एका. श्लो.5)

अयं भावः-भगवान् राम उवाच- अयि भो महर्षयः। भवादृशानां तपस्विनां ब्राह्मणानां सेवा स्वयमेव मया कर्तव्या आसीत्। परन्तु स्वयमेव भवन्त आगत्य उक्तवन्तः 'रक्षां कुरु' इति। अतः भवन्तः प्रसन्ना भवन्तु, अवश्यमेव अहं रक्षणं करिष्यामि।

मान्या अहम् एभिः रामायणस्य श्लोकैः इदं वक्तुमिच्छामि यत् येन प्रकारेण भगवान् रामः सज्जनान् रक्षितुं वनं जगाम। तेन प्रेरणां प्राप्य लोकमान्यबालगंगाधरतिलकोऽपि स्वदेशस्थान् सज्जनान् रक्षितुं स्वदेशस्य स्वतन्त्रतायै च महान्तं प्रयासं कृतवान्। अर्थात् अस्माकं देशः स्वतन्त्रतां प्राप्नुयात् तदर्थं महद् योगदानं दत्तवानयं तिलकः। यथा भगवान् रामचन्द्रः दिनत्रयं यावत् जड़भूतात् जलधेः=समुद्रात् लङ्कां गन्तुं मार्गम् अयाचत। किन्तु जलधिना पन्था न दत्तः। तदानीम् आवश्यकतावशात् भगवान् रामः क्रुद्धोऽभवत्। तं प्रसङ्गं तुलसीदासः लिखति–

**विनय न मानत जलधि जड़ गये तीनि दिन बीति।**

**बोले राम सकोप तब भय बिनु होइ न प्रीति।। (रामचरितमानस सुन्दरकाण्ड)**

यथा रामायणे मध्ये मध्ये आवश्यकताबशात् भगवान् रामः क्रुद्धो बभूव। तद्वदयं बालगंगाधरतिलकः शठे शाठ्यं समाचरेदिति उक्त्याधारेण वैदेशिकान् अपसारयितु महान्तं परिश्रमं कृतवान्। यतो हि अयं बालगंगाधरतिलकः गरमदलस्य नेता आसीत्। इत्थं वक्तुं शक्यते यत् भगवतो रामचन्द्रस्य जीवनेन एते प्रभाविता आसन्।

भगवतो रामस्य स्वदेशप्रेमभावेनापि एते प्रभाविताः आसन्। लंकाजयानन्तरं भगवान् रामचन्द्रः लक्ष्मणमभिमुखीकृत्य वदति –

**अपि स्वर्णमयी लंका न मे लक्ष्मण रोचते।**

**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।।**

**भगवतो रामस्य जननी जन्मभूमिश्च** इति वचनेन लोकमान्यबालगंगाधरतिलकः प्रभावित आसीत्। अत एव मातृभूमेः स्वतन्त्रतायै एते महान्तं श्रमं विहितवन्तः।

हिन्द्याम् एका उक्तिरस्ति होनहार बीरवान् के होत चीकने पात। भगवतो रामस्य विषये तुलसीदासेनोक्तम्– गुरु गृह गये पढन रघुराई अल्पकाल विद्या सब पायी।

यथा भगवान् रामचन्द्रः अल्पे वयसि सर्वाः विद्याः अधिगतवान्। तथैव बालगंगाधरतिलकोऽपि अल्पे वयसि एव सर्वाः विद्याः पठितवान्।

**उच्चनीचभावः-**

पूर्वनिपातप्रकरणे 'अल्पाच्तरम्' इति सूत्रे ब्राह्मणक्षत्रियवैश्यशूद्राः सहोच्चारिता क्व निपतन्ति इति विचारावसरे 'वर्णानामानुपूर्व्येण पूर्वनिपाता भवन्ति' इति वक्तव्यम्। ब्राह्मणक्षत्रियविट्शूद्राः इत्यादिना वेदादौ येन क्रमेण तेषामुत्पत्तिः कथिता, तेनैव क्रमेण पूर्वनिपातोऽपि कर्तव्य इत्यादि प्रतिपादयन् भगवान् न तेषां श्रेष्ठत्वमुच्चत्वं वाऽऽह, किन्तु वेदे ब्राह्मणोत्पत्तिः पूर्वमभिहितेति ब्राह्मणस्य पूर्वनिपात इत्येवोक्तम् ।

यदि तेषां पूज्यत्वापूज्यत्वे प्रसिद्धे समभूतां तदा तत्रैव 'अभ्यर्हितश्च' इत्युक्तमेव। यथा – मातापितरौ।

एवं यथा महाभाष्ये उच्चनीचभावो नासीत्। तद्वत् रामायणेऽपि उच्चनीचभावः नास्ति। अत एव मातृशबरीद्वारा दत्तानि बदरफलानि भगवता रामेण स्वीकृतानि, भक्षितानि। एवं निषादेन सह भगवतो रामस्य मैत्रीभावं वयं सर्वे जानीम एव। वानरराजेन सुग्रीवेण साकमपि भगवतो रामस्य मैत्रीभावं वयं जानीम एव। येन प्रकारेण भगवतो रामस्य पार्श्वे उच्चनीचभावो नासीत्। तद्वत् लोकमान्यबालगंगाधरतिलकस्य पार्श्वेऽपि उच्चनीचभावः नासीत्। अत एव समाजे उपेक्षितानां कृते ते महान्तं श्रमं कृतवन्तः। इत्थं वक्तुं शक्यते भगवतो रामस्य जीवनेन ते प्रभाविता आसन्।

**समाजः**

अस्माकं समाजः कथं भवेत् तदर्थमुच्यते अस्माकं समाजे जना सुचरित्राः स्वाध्यायशालिनः, ब्रह्मचर्यरताः, समाजेन समादृता देशभूषणा भवन्ति। ये च दुश्चरिता अनध्ययनवन्तस्ते कठोरतरं निभर्त्सिता भवन्ति इति भगवता भाष्यकारेण पतञ्जलिना उक्तम्।

यथा महाभाष्ये समाजस्य स्वरूपमुपवर्णितम्। ते सर्वे गुणाः मर्यादापुरुषोत्तमरामे आसीत्। अत एव तस्य 'मर्यादापुरुषोत्तम' इति विशेषणं संगच्छते। अत एव भगवान् रामः समाजबाधकस्य दुश्चरितस्य रावणस्य बधमकरोत्।

एते सर्वेऽपि देशभूषणादयो ब्रह्मचर्यादयो गुणा लोकमान्यबालगंगाधरतिलकस्य पार्श्वे आसन्। इत्थं वक्तुं शक्यते यद् भगवतो रामस्य जीवनेन ते प्रभाविता आसन्।

1. भगवतो रामस्य वीरताभावेन प्रभावित आसीत्।
2. रामराज्यभावनया अपि प्रभावित आसीत्।

मान्या इदानीम् 'एतेषां जीवने गीताया प्रभावः' इति द्वितीयविषयमाश्रित्य स्वकीयान् विचारान् प्रस्तौमि। मान्या लोकमान्यबालगंगाधरतिलकमहोदयः कारागारमध्ये 'गीतारहस्य' नामकं ग्रन्थम् अलिखत्। अयं ग्रन्थः भागद्वये विभक्तोऽस्ति। गीता का इति जिज्ञासाशान्त्यर्थमुच्यते –

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।**

अर्थात् यावत्य उपनिषदस्ताः गावः सन्ति, भगवान् श्रीकृष्णचन्द्रः गोपालनन्दनः दोग्धा अस्ति। पार्थः अर्जुनः वत्सः अस्ति। तथा सुधीर्जनः भोक्ता अस्ति। एवं महत् गीतामृतं दुग्धमस्ति। साररूपेणेदं वक्तुं शक्यते यत् सर्वासाम् उपनिषदां सारः श्रीमद्भगवद्गीता अस्ति।

मान्या श्रीमद्भगवद्गीतायाः लोकमान्यबालगंगाधरतिलकस्योपरि महान् प्रभाव आसीत्। कथमिति चेत् श्रूयताम्, यदा अर्जुनः भीष्मपितामहादीन् सर्वान् स्वसम्बन्धिनो दृष्ट्वा किंकर्तव्यविमूढः अभवत्। तदा स अर्जुनः श्रीकृष्णचन्द्रं प्रति अवोचत् यत् –

**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।**
**न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च।1-3।**

अयं भावः- हे कृष्ण। स्वजनं हत्वा श्रेयः=कल्याणं न पश्यामि। अतः अहं विजयं, राज्यं सुखानि न कांक्षे। नेच्छामि।

अपि च

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।**
**इषुभिः प्रति योत्स्यामि पूजार्हावरिसूदन।।2-4**

अपि च

**गुरुनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके।**
**हत्वार्थकामांस्तु गुरुनिहैव।**
**भुञ्जीय भोगान् रुधिरप्रदिग्धान्।।2-5**

अर्थात् हे मधुसूदन। महानुभावान् गुरुन् हत्वा राज्यभोगापेक्षया भैक्ष्यमेव वरमस्ति। भिक्षावृत्ति एव उपयुक्ता प्रतीयते। अतः अहं युद्धं न करिष्यामि। एवम् अर्जुनस्य दैन्यं दृष्ट्वा श्रीकृष्णचन्द्रः अवोचत् यत् –

**अन्तवन्त इमे देहा नित्यस्योक्ता शरीरिणः।**
**अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत।।2-18**

अयं भावो यत् – हे अर्जुन! अविनाशिनः, अप्रमेयस्य शाश्वतस्य जीवात्मनः भौतिकशरीरस्य अन्तः = नाशः अवश्यम्भावी अस्ति। तस्माद् युद्धं कुरु।

अपि च

**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः।।3-19**

अयं भावः – हे अर्जुन! कर्मफलेषु अनासक्तं भूत्वा स्वकर्म कर्तव्यम्। यतो हि कर्मफलेषु अनासक्तः सन् यदा मनुष्यः कर्म करोति तदा सः परमां गतिम् मोक्षं प्राप्नोति। अतः स्वकीयं युद्धं कर्म कुरु।

अपि च

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम्।।8-7**

अयं भावं श्रीकृष्णचन्द्रः पुनः वदति हे अर्जुन। मयि स्वमनः स्वबुद्धिम् अर्पयतु। तेन मामवश्यं प्राप्स्यसि। सर्वदा माम् स्मारं स्मारं युद्धं कुरु।

एवं वारं वारं भगवान् श्रीकृष्णचन्द्रः अवोचत् यत् तस्मात् युद्धं कुरु। तस्मात् युद्धं कुरु इति। अन्ते श्रीकृष्णचन्द्रः अपृच्छत् यत् –

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।**
**कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय।।18-72**

हे पृथापुत्र हे धनञ्जय? किं त्वया एतत् शास्त्रम् एकाग्रेण चेतसा श्रुतम्। किं तव अज्ञानमिदानीं नष्टम्। तदा अर्जुनः अवदत् यत् –

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव।।18-73**

अयं भावो यत् अन्ते अर्जुन उवाच यत् हे कृष्ण हे अच्युत इदानीं मम मोहः गतः। भवतां कृपया मम स्मरणशक्तिः समागता। इदानीमहं संशयरहितो भूत्वा दृढसंकल्पं च विधाय भवताम् आदेशानुसारेण युद्धरूपं स्वकर्म करिष्यामि।

अनेन माध्यमेन अहम् इदं वक्तुचिछामि यत् लोकमान्यबालगंगाधरतिलकस्योपरि एतस्य गीतावचनस्य महान् प्रभावः आसीत्। एभिः गीतावचनैः तिलकः प्रेरितो भूत्वा स्वतन्त्रताप्राप्त्यर्थं संकल्पं कृतवान्। यतो हि गीतारहस्यनामके स्वग्रन्थे एतानि गीतावचनानि तेन स्वयम् उद्धृतानि। तथा च यथा- भगवान् कृष्णः अर्जुनं युद्धं कर्तुं प्रेरितवान्। तद्वत् लोकमान्यबालगंगाधरतिलकोऽपि समाजस्थान् जनान् स्वतन्त्रताप्राप्त्यर्थं प्रेरितवान्। तेन वक्तुं शक्यते यद् भगवतः कृष्णस्य महान् प्रभावः आसीत् एतेषां जीवने।

**सन्दर्भग्रन्थसूची –**


1. गीतारहस्यम्, बालगंगाधरतिलकः
2. रामायणम्, वाल्मीकिः
3. श्रीमद्भगवद्गीता, भक्तिवेदान्त बुक ट्रस्ट द्वारा प्रकाशित एवं मुद्रित।
4. रामचरितमानस, तुलसीदासः
5. वैयाकरणसिद्धान्तकोमुदी, श्रीमद्भट्टोजिदीक्षितः
6. महाभाष्यम्, पतञ्जलिः



*व्याकरणविद्याशाखा,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*

# स्वतन्त्रतासङ्ग्रामे संस्कृतज्ञस्वातन्त्र्यवीराणां योगदानम्

**डॉ. गणेश टि. पण्डितः**



'न स्वातन्त्र्यसमं सौख्यम्' इति पौराणिकं वचः। ऋते स्वातन्त्र्यात् न सुखमुपलभ्यते न वा शिष्टेष्टसिद्धिः जायते। अतः पाश्चात्यहस्तगतं सौख्यं स्वायत्तीकर्तुं स्वातन्त्र्यसम्पादनमेव एकमेवाद्वितीयः उपाय इति वीरभारतीयैः विचिन्ततम्। तत्कारणादेव स्वतन्त्रतासङ्ग्रामः आन्दोलनं च स्वातन्त्र्यवीराणां परमं कर्तव्यमभूत् । तेषां हि महापुरुषाणां योगदानेन बलिदानेन च वयमधुना स्वतन्त्रराष्ट्रे ससुखं जीवनं यापयन्तः स्मः। 'न हि कृतमुपकारं साधवो विस्मरन्ति' इत्युक्त्ययनुसारं त्यागपुरुषाणाम् अमीषां समेषां स्मरणम् अनुदिनं कर्तव्यमेव। तत्रापि संस्कृतज्ञस्वातन्त्र्यवीराणां स्मरणम् अस्माकम् आद्यं कर्तव्यमपि वर्तते। संस्कृतज्ञस्वातन्त्र्यवीराः यद्यपि अधुना न जीवन्ति तथापि तेषां राष्ट्रसेवासम्बद्धानि विविधानि गद्यपद्यनाटकाख्यायिकादीनि अद्यापि तान् स्मारयन्ति। ते वाङ्मयमाध्यमेन अस्माकं मध्ये एव विलसन्त्यपि । अतः तेषां वीराणां संस्मरणं सदैव विधेयमेव। तदर्थमेषः नव्यः उपक्रमः।

महाराष्ट्रे पुण्यपुत्तने प्राप्तजन्मा **माधव श्रीहरि अणे महोदयः** (1880-1968) **श्रीतिलकयशोर्णवः** इत्यस्मिन् बृहदैतिहासिकमहाकाव्ये नैकशास्त्रकोविदानां लोकमान्येति विश्रुतानां बालगङ्गाधरतिलकवर्याणां सम्पूर्णं व्यक्तिचित्रणं सप्रमाणमकरोत्। त्रिषु खण्डेषु पञ्चाशीतिः सङ्ख्याकेषु तरङ्गेषु च विभक्तः अयं ग्रन्थविशेषः संस्कृतज्ञस्वातन्त्र्यवीरेण संस्कृतज्ञस्वातन्त्र्यवीराणां वर्णनाय विरचितोऽस्ति। संस्कृतज्ञस्वातन्त्र्यवीरचरितवर्णनपरः बृहदाकारकश्च एकमेवाद्वितीयः ग्रन्थविशेषः एष एव। ग्रन्थकारोऽपि पद्मविभूषणपुरस्कारेण पुरस्कृतोऽस्ति। ग्रन्थारम्भे सः भारतस्य हृदयतिलकं सश्रद्धं नमति। तद्यथा -

**रक्तोष्णीशं शिरसि रुचिरं चन्दनाङ्कश्च भाले**
**हस्ते यष्टिं तुहिनधवलामङ्गरक्षां शरीरे।**
**स्कन्धाज्जानूपरि विलसितं चोत्तरीयं दधानं**
**बालं भव्यं तिलककुलजं लोकमान्यं नमामि ॥**[1]

अस्य श्लोकस्य श्रवणमात्रेणैव वयं बालगङ्गाधरतिलकवर्याणां भव्यं रूपं स्मृतिपथे समानेतुं प्रभवामः। 'स्वराज्यं आस्माकीनः जन्मसिद्धः अधिकारः' इति तिलकवर्याणां डिण्डिमघोषः आसीत्। सेवा हि परमो धर्मः इति ते पौनःपुन्येन निगदन्ति स्म। तेषां हृद्गतः भावः तेषामेव सहचरेण कविना अणेमहोदयेन वर्ण्यते यथा -

**अहं सर्वैरुपकृतः सज्जनैर्देशबान्धवैः।**
**सर्वपक्षैः सर्ववर्णैः सर्वधर्मानुयायिभिः ॥**
**ऋणापकरणं शक्यं नाधमर्णेन वै पृथक्।**
**प्रशस्यते सङ्घटिता जनसेवा विवेकिभिः ॥**[2] **इति**

कथं स्वातन्त्र्यमधिगन्तुं शक्यते? इत्यस्य प्रश्नस्य उत्तरमपि अत्रैव उपलभ्यते। कायेन वाचा मनसा च

देशसेवायां ये संलग्नाः सम्भवन्ति ये च आत्मार्पणे न सङ्कुचन्ति ते एव त्यागबुद्धयः स्वातन्त्र्यमधिगच्छन्ति इति सूक्तमेव तत्र। तद्यथा -

**सामान्यवस्तुलाभोऽपि न तु त्यागं विना भवेत् ।**
**न विनात्मार्पणं कश्चित् स्वातन्त्र्यमधिगच्छति ।।[3] इति ।**

स्वातन्त्र्येण सम्बद्धाः अस्माकं मनोरथाः पराक्रमेण सिध्यन्ति इत्यतः विना दैन्यं विना भैक्ष्यं तदासादनीयमिति निगद्यते संस्कृतकुलतिलकेन। यथोक्तं तत्र -

**न प्रार्थना न विज्ञप्तिर्भैक्ष्यं नैव च नैव च ।**
**पराक्रमेण सिध्यन्ति स्वातन्त्र्यस्य मनोरथाः ।।[4]**

एवं स्वातन्त्र्येण सम्बद्धाः मूलभूतविचाराः तिलकयशोर्णवे सूपपादिताः सन्ति। स्वातन्त्र्यविषयिणी सनातनी भारतीया रणनीतिः सात्त्विकी आसीत्। अहिंसामार्गेण एव स्वातन्त्र्यमवाप्तुं शक्यते इति तिलकवर्याणामभिमतम्। एकवारं विरोधिभिः तिलकवर्याणाम् अपमाननं कृतम्। क्षमाशीलास्ते अन्ततोगत्वा विरोधिभ्यः क्षमादानमकुर्वन्। **तदेवोक्तम् -**

**न शत्रुरपि हन्तव्यः शरणं यः समागतः ।**
**युद्धनीतिर्भारतीया तिलकेनावलम्बिता ।।**

परमगहनमिदं तिलकचरितं तरुणहृदयस्पर्शि सत् स्वतन्त्रतासङ्ग्रामे प्रधानपात्रमवहत् इत्यत्र नास्ति सन्देहः। सत्यमेवोक्तं कविना देवगुरुतुल्याः तिलकवर्याः इति । तद्यथा -

**धैर्येण भूधर इवाम्बुधिवद् गभीरो**
**यस्तेजसाऽर्क इव शीतकरः शशीव ।**
**ज्ञानेन गीष्पतिरिवोत्तमकर्मयोगी**
**तं भारतस्य हृदयं तिलकं नमामि ।।[6] इति ।**

एवं तिलकवर्याणां यशोगाथा अस्मिन् महाकाव्ये सूपपादिता अस्ति।

स्वातन्त्र्यवीराणां बलिदानमाश्रित्य लेखनेन मम लेखनी सार्थक्यं भजते इति महाकविना स्वयम्प्रकाशशर्मणा श्रीभक्तसिंहचरितम् (1917-1983) इत्यस्मिन् महाकाव्यारम्भे उच्यते।
यथा -

**धन्याः सुपुण्या निजदेशमुक्त्यै**
**प्राणान् स्वकान् ये तृणवत् त्यजन्ति ।**
**विलिख्य पुण्यं चरितं हि तेषां**
**पुण्यत्वमीयादपि लेखनी मे ।।[7]**

पञ्जाबजनपदे प्राप्तजन्मा असौ सप्तभिः सर्गैः युक्तं काव्यमिदमरचयत्।

मृत्युदण्डसमये भक्तसिंहस्य वीरभणितयः कविना अत्यन्तं मनोज्ञया शैल्या उल्लिखिताः सन्ति। तद्यथा -

**चेज्जन्म दद्यात्पुनरेव देव स्तदत्र**
**भूयाद् भुवि भारतेऽस्मिन्।**
**सेवाञ्च कुर्यां निजमातृभूमे**
**र्दत्वापि मस्तं बहुभक्तियोगात्॥[8] इति॥**

प्रसङ्गः यः कोऽपि वा भवतु परं स्वतन्त्रतासङ्ग्रामस्य कालघट्टे रचितेषु संस्कृतगद्यपद्यचम्पूकाव्येषु नाटकेषु महाकाव्येषु च देशभक्तिः प्रस्फुरतितमाम्।

उत्तरप्रदेशस्य मेरठ प्रान्ते लब्धजन्मा **विष्णुदत्तशर्मा** (1937) स्वीये गुरुनानकदेवचरिते राष्ट्रवैभवम् इत्थमवर्णयत् तद्यथा -

**यस्य स्थितिर्भूमितलेऽखिलेऽपि**
**प्रधानभूता च पुरातनी च।**
**अङ्गीकृता सर्वजनैः सदैव**
**जयत्यसौ भारतवर्षदेशः॥[9] इति॥**

विविधजातिकुलवर्णधर्मीयाः भारतीयाः सुसङ्घटिताः स्युः सर्वदा न तु विघटिताः इत्याशाभावेन भ्रातृत्वभावं जागरयन् गुरुनानकमुखेन गापयति कविः।

तद्यथा -

**सर्वोऽपि युष्मासु समानसारः**
**कश्चित् परस्मान्न लघुर्गुरुर्वा।**
**देहस्य सर्वेऽवयवाः समानाः**
**समा समेषामुपयोगिताऽस्ति॥**
**न जन्मना कोऽपि पुरस्क्रियार्ह**
**स्तिरस्क्रियार्होस्त्यथवा मनुष्यः।**
**कर्मैव पूज्यं न च चर्म पुंसां**
**कर्मैव हेतुर्न हि जन्ममुक्तेः॥**
**तस्माद् विहायाखिलजातिभेदान्**
**सर्वे समत्वेऽपि निबद्धचित्ताः।**
**अन्योन्यसौभ्रात्ररसेन सिक्ता**
**हरिं भजन्तो विलसन्तु लोके॥[10]**

एवं स्वातन्त्र्यवीराणां संस्कृतज्ञानां तत्कालिकमहाकवीनां च लक्ष्यमेकमेवासीत्। तदेव श्लोकार्धेनोक्तं राजकिशोरमणित्रिपाठिवर्यैः - 'निरर्थकं जन्म ममापि न स्यादतः प्रवृत्तो न कवित्वदर्पात्' इति। देशसेवां विना नरजन्म सार्थकतां न भजते इति सूक्तमेव कविना। एवं स्वतन्त्रतासङ्ग्रामसमये रचितेषु काव्यनाटकगद्याख्यायिकादिषु देशभक्तेः विचारान् वयम् अवलोकयितुं प्रभवामः।

नवदशे शताब्दौ केरलराज्ये प्राप्तजन्मा गोदवर्मयुवराजः इत्येषः महाकविः श्रीरामचरितम् इतीदं महाकाव्यं रचयामास। यद्यपि श्रीमद्वाल्मीकिरामायणमेव अस्य मूलमस्ति तथापि अस्मिन् महाकाव्ये वयं तत्र तत्र राष्ट्रहितसंवर्धकान् अंशान् विलोकयितुं शक्नुमः। यः आत्मरक्षणपुरस्सरं स्वाश्रितान् सर्वान् समुद्धरति सः राष्ट्रस्य हितैषी भवति। तदीयं राष्ट्रमपि उन्नतिं विन्दति इति। तद्यथा -

**अनुरक्षति यो रक्ष्यान् रक्षन्नात्मानमग्रतः ।**
**राष्ट्रं विवर्धते तस्य स चिरं सुखमश्नुते ।।[11]इति ।**

देशभक्त्या एव मया संस्कृतेन लिख्यते इति संस्कृतज्ञा स्वातन्त्र्यवीरा क्षमाराव् इत्येषा सत्याग्रहगीतायामलिखत्। यथोक्तं तया -

**तथापि देशभक्त्याहं जाताऽस्मि विवशीकृता ।**
**अत एवास्मि तद्गातुमुद्यता मन्दधीरपि ।।[12]**

सत्याग्रहमार्गेण अर्थात् शान्तिमार्गेण एव लक्ष्यमवाप्तुं शक्यते इति गान्धीमहोदयस्य समर्थिका एषा अवदत्। तद्यथा-

**दुर्बला ननु गण्यन्ते शान्तिमार्गावलम्बिनः ।**
**परं सत्याग्रहाद् विद्धि नास्ति तीव्रतरं बलम् ।।[13]**

कवयित्री क्षमारावचर्या अलिखत् यत् नित्यमेव स्वातन्त्र्यविषयकचिन्तनेन कार्यकरणेन च अचिरात् एव स्वातन्त्र्यमवाप्तुं शक्यते इति। स्वातन्त्र्यप्राप्तिरेव भारतीयानां परमं प्रियम् अस्ति इति सा अवर्णयत्। तद्यथा -

**कुर्वन्तो नित्यमेवं हि स्वातन्त्र्यं प्राप्स्यथाचिरात् ।**
**स्वातन्त्र्यादपि भूतानां प्रियमन्यन्न विद्यते ।।[14]**

वैदेशिकानां दुष्टोपायैः दुष्टकर्मभिश्च वयं परतन्त्राः संवृत्ताः। सम्प्रति भरतधरण्याः शत्रुपाशात् मोचनं विधेयमस्तीति उत्तरप्रदेशस्य गङ्गाप्रसादोपाध्यायाख्येन (1881) कविना उच्यते। एतत्सर्वं कार्यं भारतीयैरेव आत्मावलोकनं कृत्वा कर्तव्यमित्यतः नान्येषां प्रतीक्षा स्यात् इति सः अवदत्। यथोक्तम् आर्योदयमहाकाव्ये -

**पश्येत् को वा स्वहितविषयान् स्वार्थभावान् विहाय**
**रक्षेत् को वा रिपुणगणकराद् देशधान्यं धनं वा ।**
**कुर्यात् को वा परवशहतां मातरं शल्यशून्यां**
**को वा भव्यां भरतधरणीं मोचयेच्छत्रुपाशात् ।।[15]**

भारतीयाः परतन्त्राः कुतो संवृत्ताः? इत्यस्य उत्तरमपि कविना दीयते। पारस्परिकः कलहः जातीयसङ्घर्षश्च पराधीनतायाः निदानमस्ति। अतः पराधीनतां निवारयितुं सर्वैः भारतीयैः विना भेदभावं सङ्घटितैः भवितव्यमिति अलिखत्। तद्यथा -

**काङ्क्षामात्रमलं नृणां न हृदये साध्यस्य पूर्तौ क्वचित्**
**योग्यायैव ददाति वाञ्छितफलं विश्वम्भरः सर्वदा ।**
**यावद् दुष्टगुणांस्त्यजेन्न जनता जातीयताघातकान्**
**तावच्छक्तिमुपैति नैव न च वा मुञ्चेत् पराधीनताम् ।।[16]**

एवं प्राप्तप्रमाणैः विज्ञायते यत् स्वतन्त्रतासङ्ग्रामे संस्कृतस्वातन्त्र्यवीराणां बहूनाम् अनितरसाधारणं योगदानमस्त्येवेति।

**सन्दर्भाः –**

1. माधव श्रीहरि अणे, (1880-1968), श्रीतिलकयशोर्णवः, 9/90
2. माधव श्रीहरि अणे, श्रीतिलकयशोर्णवः, 26/45,46
3. माधव श्रीहरि अणे, श्रीतिलकयशोर्णवः, 26
4. माधव श्रीहरि अणे, श्रीतिलकयशोर्णवः, 33/154
5. माधव श्रीहरि अणे, श्रीतिलकयशोर्णवः, 27/30
6. माधव श्रीहरि अणे, श्रीतिलकयशोर्णवः, 38
7. स्वयम्प्रकाशशर्मा, श्रीभक्तसिंहचरितम्, 1/2
8. स्वयम्प्रकाशशर्मा, श्रीभक्तसिंहचरितम्, 6/1
9. विष्णुदत्तशर्मा, गुरुनानकदेवचरितम्, 1/4
10. विष्णुदत्तशर्मा, गुरुनानकदेवचरितम्, 16/4,5,12
11. गोदवर्मयुवराजः, श्रीरामचरितम्, 8/64
12. क्षमाराव्, सत्याग्रहगीता, 1/3
13. क्षमाराव्, सत्याग्रहगीता, 10/35
14. क्षमाराव्, सत्याग्रहगीता, 10/37
15. गङ्गाप्रसादोपाध्यायः, आर्योदयमहाकाव्यम्, 4/19
16. गङ्गाप्रसादोपाध्यायः, आर्योदयमहाकाव्यम्, 10/4

**सन्दर्भग्रन्थसूची –**


1. क्षमाराव, सत्याग्रहगीता, न. मा. त्रिपाठी प्रा. लिमिटेड, मुम्बई
2. गोदवर्मयुवराजः, श्रीरामचरितम्, निर्णयसागर प्रेस, मुम्बई
3. गङ्गाप्रसादोपाध्यायः, आर्योदयमहाकाव्यम्, कला प्रेस, इलाहाबाद
4. संस्कृत साहित्य का बृहद् इतिहास, डा. जगन्नाथ पाठक, उत्तर प्रदेश संस्कृत संस्थान, लखनऊ
5. जयन्ती (वार्षिक शोध पत्रिका), (2020-21), के. सं. विश्वविद्यालयः, जयपुरपरिसरः, जयपुरम्



*सहायकाचार्यः*

*केन्द्रीयसंस्कृतविश्वविद्यालयः,*

*राजीवगान्धीपरिसरः, शृङ्गेरी*

# स्वतन्त्रतासङ्ग्रामे धार्मिकग्रन्थानां प्रभावः

डॉ. कृष्णा शर्मा



**शोधसारांश :**

सम्प्रति सम्पूर्णदेशे स्वतन्त्रताया अमृतमहोत्सवः प्रचलति। स्वतन्त्रता केवलमेकदिवसस्य क्रियाकलापस्य परिणामो नासीत् अपितु सहस्रशः जनाः वर्षाणि पर्यन्तं स्वकीयं गृहं, परिवारं सर्वं परित्यज्य अस्मिन् कार्ये संलग्ना अभवन् तदा वयं एतादृशीं स्वतन्त्रतां प्राप्तवन्तः। यदा भारतं परतन्त्रमासीत् तदा सर्वे आंग्लजनैः पीडिता आसन्। तेषु जनेषु केषाञ्चित् मनसि स्वतन्त्रताया भावना समुद्भूता। अस्याः मूले अस्माकं सनातनधर्म आसीत्। अस्मिन् संग्रामे अस्माकं धार्मिकग्रन्थानामत्यधिकप्रभावः दृश्यते। शोधलेखेऽस्मिन् तस्य परिचर्यां करिष्यामः।

**कूटशब्दा :**

स्वतन्त्रताया अमृतमहोत्सवः, स्वाधीनता, परतन्त्रता, सनातनधर्मः, क्रान्तिवीराः, दण्डविधानम्, चतुष्पथे, प्रतिशोधार्थम्, अपहृतधनम्, अदीर्घसूत्रः, अभिषेकादिगुणयुक्तः, धारणसंयुक्तः, राजधर्मः, नाशयत्यशुभां गतिम्, पाशरज्जुम्, आन्दोलनम्, विवृतपौरुषः, निमित्तधर्मः।

स्वतन्त्रतासंग्रामस्य मूलाधारे **'यतो धर्मस्ततो जयः'**[1] इति वचनस्य प्रतिबिम्बं परिलक्ष्यते। स्वतन्त्रतासंग्रामे ये ये क्रान्तिवीराः स्वकीयजीवनं समर्पितवन्तः तेषां जीवनचर्यां यदि वयं पश्यामश्चेत् ज्ञास्यामः यत् तेषां गृहस्य, कुलस्य, ग्रामस्य नगरस्य च वातावरणं धर्मयुक्तमासीत्। तस्मिन् समये जनाः स्वकीय धर्मं प्रति सुदृढाः समर्पिताश्च आसन्। सर्वप्रथमं धर्मरक्षां स्वीकुर्वन्ति स्म तदनन्तरं जीवनरक्षाम्। भारतदेशः सनातनधर्मस्य आधारभूतक्षेत्रं वर्तते। अस्माकं देशस्य स्वतन्त्रतासेनानीनां सर्वत्र कीर्तिः स्थापिता। यदा भारतदेशः परतन्त्र आसीत् तदा सर्वे जनाः आङ्गलजनैः पीडिताः आसन्। तेषां दुराचारेण भारतीयानां जीवनयापनं महान् दुष्करोऽभूत्। तेषु पीडितेषु जनेषु केषाञ्चित् जनानां मनसि स्वतन्त्रतायाः भावना समुद्भूता। यतोहि अस्माकं देशे धार्मिकजना अधिकाः निवसन्ति। अतः सर्वेषां मनसि एका एव धार्मिकभावना उद्भूता यत् स्वराज्यस्थापना कथं भवेतव्या?

जनेषु राष्ट्रप्रेम जागृतोऽभूत्। अस्याः भावनायाः मूले वर्तते अस्माकं सनातनधर्मः। 1857 तमे वर्षे मंगलपाण्डेवर्येण विद्रोहः कृतः तस्य मूलाधारे धर्मरक्षा एव आसीत्। यतोहि स गोमांसनिर्मित 'कारतूस' इत्यस्य संचालनार्थं मुखस्पर्शं नाकरोत्। तत्पश्चादेव क्रान्तिः वर्धिता। अस्मिन् परिदृश्ये मनुवचनं सार्थकं भवति तच्च

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ।।**[2]

अर्थात् विनष्टधर्मेण स्वयं हतः तथा रक्षितधर्मेण स्वयं रक्षितः। अस्मात् कारणात् सदैव धर्मस्य रक्षणं कुर्यात् यतोहि धर्मरक्षया एव भुवि सर्वेषां प्राणिनां रक्षणं संभवं नान्यथा। धर्मस्वरूपज्ञापनार्थं दशलक्षणकधर्मस्य परिभाषा मनुनोक्तं यत्-

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।**[3]

दशविधधर्मलक्षणयुक्ताया भावनाया आधारेण भारतीयजनाः स्वतन्त्रतासङ्ग्रामे सफला अभवन्। जनानां प्रमुखोद्देश्यो वर्तते स्वतन्त्रताप्राप्तिः। स्वतन्त्रता तदैव प्राप्ता भवति यदा अस्माकं गृहे स्वतन्त्रताया वातावरणं भवेत्, गृहस्य वातावरणस्य स्वतन्त्रतायाः कारणं वर्तते स्वतन्त्रदेशः। स्वतन्त्रदेशार्थं तु स्वराजस्थापना आवश्यकी। एतादृश्यां विकटपरिस्थित्यां जनाः षड्विधस्मार्तधर्मस्य पालनमपि राष्ट्रहिताय स्वीकुर्वन्ति स्म। सनातनधर्मे षड्विधस्मार्तधर्मा उच्यन्ते ये च वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, नैमित्तिकधर्मः, साधारणधर्मश्चेति।

**(1) वर्णधर्म :-**

चतुर्णां वर्णानां धर्मविषये धर्मशास्त्रीयग्रंन्थेषु विविधाः परिभाषाः प्रदत्ताः। ब्राह्मण-क्षत्रिय-वैश्यशूद्राणाञ्च धर्मविषये कर्त्तव्याकर्त्तव्यविषये स्मृतिकारा वदन्ति यत्-

**अध्यापनमध्ययनं यजनं याजनं तथा ।**
**दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ।।**
**प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च ।**
**विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ।।**
**पशूनां रक्षणं दानमिज्याध्ययनमेव च ।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ।।**
**एकमेव शूद्रस्य प्रभुः कर्म समादिशत् ।**
**एतेषामेव वर्णानां शुश्रुषामनसूयया ।।**[4]

साङ्गोपाङ्गवेदाध्ययनं ब्राह्मणस्य, प्रजारक्षणं क्षत्रियस्य, वाणिज्यं पाशुपाल्यं वैश्यस्य, वर्णानां शुश्रूषा शूद्रस्य एतान्येतेषां वृत्यर्थकर्मसु श्रेष्ठानि प्रतिपादितानि। स्वतन्त्रतासंग्रामस्यावसरे एते सर्वे वर्णाः स्वकीयधर्मान् विहाय सर्वोपरि राष्ट्रधर्मस्य निर्वहने सन्नद्धा आसन्। ये जनाः स्वतन्त्रतासंग्रामे रता आसन् तेषां सर्वेषां हृदि राष्ट्रप्रेम आसीत्।

**(2) आश्रमधर्म :-**

ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमाणां धर्मेषु सामान्यजनाः क्रमशः प्रवृत्ता भवति। उत्तरोत्तरम् अथवा आश्रमादाश्रमं गत्वा स्वधर्मं निर्वहन्ति किन्तु स्वतन्त्रतासंग्रामस्यावसरे जनाः सर्वान् धर्मान् प्ररित्यज्य राजधर्मं स्वीकृतवन्तः। क्रान्तिवीरं शहीदभगतसिंहं को न जानाति सर्वं विदितमस्ति यत् एकदा स बाल्यकाले स्वकीय पितृव्येण सह क्षेत्रे कार्यं कुर्वन्नासीत् तदा तस्य पितृव्यः क्षेत्रे वृक्षं आरोपयति स्म। स बालकः तं पृष्टवान् ''भवान् किं करोति?'' तदा तस्य पितृव्यः वदति यत् अहं आम्रवृक्षं आरोपयामि यदा वृक्षे फलानि भविष्यन्ति तदा सर्वे मिलित्वा आम्रफलानि खादयिष्यामः। तदैव अल्पसमयानन्तरं भगतसिंहः लघुः-लघुः काष्ठानि मृत्तिकायां आरोपयति तदा तस्य पितृव्यः पृष्टवान् त्वम् किं कुर्वन् अस्ति? तदा भगदसिंहस्योत्तरं श्रुत्वा सः स्तब्धः। तस्योत्तरमासीत् यत् बन्दूकशस्त्रस्य कृषिकार्यं करोमि। यतोहि अग्रे बहुसंख्याकानि यन्त्राणि प्राप्स्यामः। यन्त्रैः आङ्गलजनान् पराजयामः।

एवं तस्य ब्रह्मचर्यधर्मपालनावस्थायां स बालकः राजधर्मस्य पालनं करोति। एतादृशा अस्माकं भारतवर्षे राजधर्मरक्षका आसन्।

**(3) वर्णाश्रमधर्मः –**

वर्णाश्रमधर्मान्तर्गते ब्राह्मणवर्णस्य चतुर्ष्वाश्रमेषु ये ये धर्माः प्रतिपादिताः तेषाम् आश्रमक्रमाद् ब्राह्मणवर्णस्य धर्मः स्वीक्रियते। तथैव क्षत्रियवर्णोऽपि प्रत्याश्रमाणाम् आयोनुसारं धर्मपालनं करोति। तथैव वैश्य शूद्रश्चापि स्वधर्मपालनं कुरुतः। किन्तु स्वतन्त्रतासंग्रामस्यावसरे सर्वे भारतीयक्रान्तिकारीवीराः क्षत्रियधर्मानुसारं स्वराज्यरक्षार्थं संलग्ना अभवन्। तेषां सर्वेषां मनसि एका एव भावना आसीत् 'स्वकीयदेशस्य स्वतन्त्रताप्राप्तिः।' स्वतन्त्रभारते चन्द्रशेखरआजादमहोदयस्य योगदानं सर्वैः विदितम्। तेषां सम्पूर्णजीवनं स्वराष्ट्राय समर्पितमासीत्। लालालाजपतरायमहोदयस्य मृत्योः कारणात् आजादः क्रुद्ध आसीत् अस्मात् कारणात् तस्य प्रतिशोधार्थम् 1928 तमे वर्षे लाहौरनगरे सान्डर्सनामकं ब्रिटिश-अधिकारि आजादवर्यैः बन्दूकयन्त्रेण हतः।

एतस्य मतमासीत् यत् आङ्लजना भारतीयधनं स्वीकृतवन्तः। अत आङ्गलजनेभ्य राजकीयकोषं छित्वा क्रान्तिवीराणां गतिविध्यर्थं एकत्रीकरणं प्रारम्भं करणीयम्। तेषां मनसि ये राष्ट्रहितविचारा आसन् ते अस्माकं धार्मिकग्रन्थेषु वर्णिताः सन्ति। सर्वप्रथमं राष्ट्रधर्मस्य पालनमावश्यकम्। ये जनाः स्वस्य देशस्य धनमपहर्तुमिच्छन्ति ते चौरवत् दण्डनीयाः। स्तेयदण्डविधानं विविधशास्त्रेषु वर्णितम् याज्ञवल्क्येनोक्तं यत्-

**चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः।**[5]

व्यासेनोक्तं यत्-

**स्त्रीहर्ता लोहशयने दग्धव्यो वैकटाग्निना।**
**नरहर्ता हस्तपादौ छित्वा स्याप्यश्चतुष्पथे॥**[6]

आङ्गलजनैः भारतीयाः पीडिताः। ते स्वकीयधनस्योपयोगः स्वतन्त्ररूपेण कर्तुम् असमर्थाः, स्वकीयानां प्रसाधनानामुपयोगहेतुः आङ्गलजनानामनुमति अनिवार्या, ते सर्वथा सर्वदा च पीडिता, असुरक्षिता, अस्वतन्त्रा आसन्। एतदर्थं भारतीया रुष्टाः। परिस्थित्यनुसारं सर्वत्र जनेषु क्रान्तिभावा उद्भूताः। ते शास्त्रवचनानुरूपं स्वराष्ट्रधर्मं स्वीकृत्य संग्रामे भागं गृहीतवन्तः।

**(4) गुणधर्मः-**

अभिषेकादिगुणयुक्तः नृपो राजधर्मं पालयति। स्वराजस्थापनार्थं नृपस्वरूपविषये याज्ञवल्क्येनोक्तं यत्-

**महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः।**
**विनीतः सत्यसम्पन्नः कुलीनः सत्यवाक् शुचिः।**
**अदीर्घसूत्रः स्मृतिमान् क्षुद्रो परुषस्तथा।**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्॥**[7]

महोत्साहस्थूललक्ष्यादि गुणानुरूपो नृपो भवेत्तव्यः यः प्रजारक्षार्थं समर्थो भवेत्। यदि प्रजायाः पालनं पोषणञ्च सम्यग्विधानेन न भवति तदा प्रजा पीडिता भवति अतः तस्याः संरक्षणाय कोषस्य रक्षणमपि अत्यावश्यकम् कोषरक्षार्थं मनुनोक्तञ्च-

**अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः।**
**रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्॥**[8]

अर्थात् अर्जितधनं भूहिरण्यादिकं जेतुमिच्छेत्, जितं प्रयत्नपूर्वकं रक्षेत्। रक्षितं च वाणिज्यादिना वर्धयेत्, वर्धितधनं पात्रेभ्यो दद्यात्। एवं धनेनैव लौककं व्यवहारिकञ्च कर्म सम्पाद्यते तदैव राजा स्वप्रजाया रक्षणं पोषणञ्च कर्तुं समर्थ्यते। क्रान्तिवीरा अपि स्वदेशस्यापहृतधनप्राप्त्यर्थं प्रयासरता आसन्।

धनेन शस्त्राणां व्यवस्था भवितुं शक्यते, धनेन विना किमपि कार्यं न सम्पद्यते। अतः आजादवर्योऽपि धनं स्वीकृत्य क्रान्तिवीराणां कृते अत्यावश्यकप्रसाधनानां व्यवस्थामकरोत्। एतादृशा गुणयुक्ताः क्रान्तिवीरा बहवः आसन् तेषां सर्वेषां वर्णनमत्र असम्भवम् किन्तु केषाञ्चनानां वीराणां वर्णनमत्र समुपलभ्यते। येषां योगदानेन स्वतन्त्रताप्राप्तिरभवत्। तेषां वीरगाथा न विस्मरणीया, तेषां महोत्साहेन, स्थूलक्ष्येन, विनयसम्पन्नस्वभावेन, ओजपूर्णसाहसयुक्ताचरणेन स्वतन्त्रतासंग्रामे वयं सफला अभवाम।

**(5) निमित्तधर्मः-**

धर्मशास्त्रानुसारं यत्किंचिद् निमित्तं तस्य निमित्तिरूपेण धर्मपालनम् नैमित्तिकधर्मः। अत्र स्वदेशस्य स्वतन्त्रतार्थं राष्ट्रधर्मस्य पालनमावश्यकम्, राजधर्मस्यान्तर्गते निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। भारतीयजना अपि स्वस्य प्रायश्चित्तरता आसन् यतोहि पूर्वं आङ्गलजनाः अत्र आगत्य वाणिज्यादिकार्यं कृतवन्तः तदा भारतीया जागरुका यदि भवन्ति चेत् तेषां दासत्वं न प्राप्नुवन्ति स्म। अत्र विहिताकरणशब्देन बोध्यते यत् प्रतिपादितधर्मस्य पालनं यदि न भवति तथा निषिद्धसेवननिमित्तार्थं निषिद्धस्य सेवनात् तन्निमित्तं प्रायश्चितं विहितम्। अत्र प्रायश्चित्तरूपेण राष्ट्ररक्षार्थमात्मानं समर्पितम्। स्वतन्त्रराष्ट्राय स्वतन्त्रतासंग्रामस्य वृहद्स्वरूपं सर्वेषां समक्षे उपस्थितम्। तत्र प्रजा राष्ट्रधर्मं धारयति तस्याः एकमेव ध्येयं वर्तते- 'स्वतन्त्रभारतः' राष्ट्रधर्मं प्रति दृढ़िभूताय महाभारतेऽपि उक्तं यत्-

**धारणाद् धर्ममित्याहु धर्मेण विधृताः प्रजाः।**
**यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥**[9]

**(6) साधारणधर्मः -**

दैनिकजीवनचर्यायां यानि कार्याणि सम्पादितानि भवन्ति तानि सर्वाणि कार्याणि धर्मयुक्तानि भवेत्तव्यानि। साधारणधर्मान्तर्गते मनोवाग्देहयुक्तत्रिविधकर्माणि धर्मयुक्तानि भवेयुरेतादृशी भावना सर्वदा व्याप्ता भवेत्। कौटिल्येनोक्तं यत्-

**चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात्।**
**नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः॥**[10]

अस्मिन् लोके सर्वेषां वर्णाश्रमाणां धर्मरक्षणाय राजधर्मप्रवर्तनमावश्यकम्। तस्मिन् समये आङ्गलजनानां कृते दण्डमावश्यकम् दण्डप्रवर्तनविषये मनुनोक्तं यत्-

**नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।**
**नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः॥**

**नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ।**
**तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ।।**[11]

अर्थात् नित्यं च शत्रोर्व्यसनादिरूपच्छिद्रानुसंधानं तत्परः स्यात्। तदनन्तरं सर्वाणि भूतानि दण्डेनैव प्रसाधयेत्। तं दण्डं देशकालौ ज्ञात्वा दण्ड्यस्य च शक्तिं विधादिकं यस्मिन्नपराधे यो दण्डोऽर्हतीत्यादिकं शास्त्रानुसारेण तत्त्वतो निरुप्यापराधिषु प्रवर्तयेत्। अस्माभिर्मनुनोक्तस्य साधारणधर्मस्य पालनमवश्यमेव करणीयः। तत्र दशविधधर्मलक्षणेषु प्रथमं वर्तते धृतिः, अर्थात् धैर्ययुक्तमाचरणं धृतिः। यदा अस्माकं क्रान्तिवीराः धैर्ययुक्ताः देशहिताय रक्षणाय च युद्धे संलग्नाः तदा दण्डेन शत्रवः पराजिता अभवन्। बहुवर्षादनन्तरं स्वतन्त्रभारतवर्षं प्राप्तमभवत्। शीघ्रतया त्रुटयः भवन्ति यदि ते वीराः पूर्वे धर्मं विना युद्धे संलग्नाः भवन्ति स्म तदा स्वतन्त्रतायाः स्वप्नं पूर्णं न भविष्यति। एवं वक्तुं शक्यते यत्- सर्वप्रथमं स्वतन्त्रभारतस्य स्वप्नं दृष्टवन्तः तदनन्तरं धैर्ययुक्तायाः सम्यग्योजनायाः स्वरूपं निर्माय तस्योपरि दृढसंकल्पमाध्यमेन सर्वैः क्रान्तिवीरैः स्वतन्त्रतायाः आन्दोलनं समारब्धम्। एवमेव राजधर्मपालनं क्रियमाणाः बहवः क्रान्तिवीराः वीरगतिं प्राप्नुवन्तः। तत्र 'शहीदभगतसिंहस्य' बलिदानेन बहवः नवयुवकाः स्वतन्त्रतायाः आन्दोलनमार्गे प्रेरिताः। तेषु एकः क्रान्तिवीर आसीत् 'शहीद हेमू कालाणी'। एतेषामायुर्यदा सप्तवर्षस्यासीत् तत एव स आन्दोलने रताः। भगतसिंहस्य बलिदानस्य वार्तां श्रुत्वा स्वकीयैः मित्रैः सह नगरस्य मार्गे मार्गे त्रिवर्णध्वजां हस्ते उत्थाप्य देशप्रेम्णः गीतं गायमानः 'भारत माता की जय' इति उद्घोषेण सर्वेषां मनसि देशप्रेमार्थमुत्साहवर्धनं कृतवान्। एते क्रान्तिवीराणां समूहनिर्माय तेषां नेतृत्वं कुर्वन्ति स्म। तेषां गीतमासीत्-

**कौमी झंडा फहराये फर फर,**
**दुश्मन का सीना काँपे थर थर,**
**आया विजय का जमाना, चलो शेर जवानो ।।**

पाशरज्जुं ग्रीवायां धारयित्वा इदं गीतं गायमान आसन्। यदि कोऽपि पृच्छति- एवं किमर्थं करोति भवान्? तदा उत्तरं भवति यत् एवं करणे अस्माकं हृदि देशोपरि बलिदानस्य भावना उद्भवति। अहमपि शहीदभगतसिंहवत् मृत्योः वरणार्थमिच्छामि। 1942 तमे वर्षे महात्मागांधीवर्येण आन्दोलिते 'भारत छोडो' आन्दोलने स्वकीयैः मित्रैः सह सोत्साहेन भागं गृहीतवान्। तस्मिन्नैव वर्षे शस्त्रयुक्तरेलयानस्य आगमनसूचना प्राप्ता तदा ते मित्रैः सह रेलयानस्य मार्गं छित्वार्थं योजना निर्मितवन्तः। यदा ते सर्वे योजनायां रताः तदा आङ्गलजनैः प्राप्ताः। सर्वाणि मित्राणि पलायतिवन्तः किन्तु हेमूकालाणीमहोदयाः तत्रैव धैर्यपूर्वकं स्थितवन्तः। ते आङ्गलजनैः सह कारावासे गृहीतवन्तः शारीरिकदण्डं प्राप्य अपि ते स्वकीय मित्राणां परिचयं न दत्तवन्तः। तदनन्तरम् ते एकोनविंशतिवर्षस्य वयसि राष्ट्ररक्षार्थं मृत्युदण्डं प्राप्य वीरगतिं प्राप्तवन्तः। एते वीराः विपरीतपरिस्थित्यौ, संसाधनानामभावे तथा च स्वजनान्, गृहं, सुखं, दुःखञ्च विस्मृत्य स्वप्राणान् समर्पितवन्तः। तदा वयमद्य स्वतन्त्रताः अभवाम। स्वतन्त्रतासंग्रामे सम्पूर्णदेशस्य सर्वेषां वर्णानां जनाः भागं ग्रहीतवन्तः। यदि पुनः चिन्तयामश्येत् वयम् प्रत्येकस्य देशभक्तवीरस्य ऋणी अनुभवामहे। एतेषां पराक्रमेण चिन्तनेन च वयम् स्वतन्त्राः अनुभवाम। महाभारतस्य शान्तिपर्वणि उक्तवचनस्य सार्थकता सिद्ध्यति उक्तं यत्-

**उदयन् हि यथा सूर्यो नाशयत्यशुभं तमः ।**
**राजधर्मस्तथालोक्यां नाशयत्यशुभां गतिम् ।।**[12]

**सन्दर्भाः –**

1. महाभारतम्/भीष्मपर्व 21/11
2. मनुस्मृतिः 8/15
3. मनुस्मृतिः 6/92
4. मनुस्मृतिः 1/88
5. याज्ञवल्क्यस्मृतिः
6. व्यवहारमयूखः, पृ. 145
7. याज्ञवल्क्यस्मृतिः, 1/109-110
8. मनुस्मृतिः 7/99
9. महाभारतम्/शान्तिपर्व/49/50
10. कौटिलीय अर्थशास्त्रम् 3/1/121
11. मनुस्मृतिः 7/102-103
12. महाभारतम्/शान्तिपर्व 56/30

**सन्दर्भग्रन्थाः –**


1. महाभारतम्, भीष्मपर्व- वसन्त श्रीपाद सातवलेकर स्वाध्यायमण्डल, पारडी, वलसाड, 1972
2. महाभारतम्, शान्तिपर्व, वसन्त श्रीपाद सातवलेकर स्वाध्यायमण्डल, पारडी, वलसाड, 1972
3. मनुस्मृतिः, श्री हरगोविन्द शास्त्री, चौखम्भा-संस्कृत-भवनम्, वाराणसी, 2011
4. याज्ञवल्क्यस्मृतिः - डॉ. कमलनयन शर्मा, जगदीश-संस्कृत-पुस्तकालय, जयपुर, 2009
5. कौटिलीयम् अर्थशास्त्रम्, वाचस्पति गैरोला, चौखम्बा-विद्याभवनम्, वाराणसी



*सहाचार्या-धर्मशास्त्रविद्याशाखा*
*केन्द्रीय-संस्कृत-विश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*

# स्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलम्

डॉ. पवनव्यासः



**शोधसारांश :**

अस्मिन् जगति यावन्ति महान्ति आन्दोलनानि सञ्जातानि तेषां सर्वेषाम् आन्दोलनानाम् आधारभूतं तत्त्वं कश्चिद् दार्शनिक विचार एव आसीत्। कस्यापि विचारस्य पृष्ठतः यदि तर्कानुकूला दार्शनिकचेतना न भवति तर्हि सः विचारः महान्तं जनसमूहम् आन्दोलयितुं न प्रभवति। भारतीयस्वातन्त्र्यसङ्ग्रामस्य अधिकरणे काचित् विशिष्टा भारतीया दार्शनिकी चेतना विद्यते यया सम्प्रेरिताः जनाः स्वातन्त्र्ययज्ञे स्वात्मानं समर्पितवन्तः। सर्वाणि भारतीयदर्शनप्रस्थानानि बन्धनमुक्तये एव प्रवर्तितानि सन्ति अतः भारतस्य पारतन्त्र्यपाशच्छेदनाय प्रवर्तिते स्वातन्त्र्यान्दोलने भारतीयदर्शनविचाराणामनन्यसाधारणं योगदानमासीदेव। सर्वेषां दर्शनप्रस्थानानां परमं प्रयोजनं मुक्तिरेव विद्यते। व्यष्टिचेतनायाः मुक्तिर्वा भवतु समष्टिचेतनायाः मुक्तिर्वा भवतु, उभयत्र भारतीयदर्शनशास्त्रेषु विद्यमानानां विचाराणां महती भूमिका विद्यत एव।

**कूटशब्दाः**

स्वातन्त्र्यसङ्ग्रामः, आत्मा, मुक्तिः, दर्शनप्रस्थानानि, दार्शनिकचेतना, पुरुषः, राष्ट्रनायकः, महात्मागांधी, वीरसावरकरः, अरविन्दघोषः, विवेकानन्दः, वेदान्तः, ब्रह्म, एकात्ममानवतावादः, साम्यवादः, उपयोगितावादः।

**स्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलम् -**

भारतवर्षस्य स्वतन्त्रताप्राप्तये यदान्दोलनं 1857 तमे वर्षे समारब्धम्, उपशतं वर्षपर्यन्तं निरन्तरं प्रवर्तितस्य तस्य स्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलं किमासीदिति विचारणाय नवदश - विंशति - शताब्द्योः सामाजिकं सांस्कृतिकं शैक्षिकं राजनीतिकं चेतिवृत्तमध्येतव्यं भवेत्। अस्य राष्ट्रव्यापिनः आन्दोलनस्य मुखराः राष्ट्रनायकाः के आसन्? तेषां जीवनदर्शनं किमासीत्? तैः राष्ट्रनायकैः विरचिते साहित्ये केषां दार्शनिकतत्त्वानां वर्णनं प्राप्यते? स्वातन्त्र्यवीरैः स्वातन्त्र्यसङ्ग्रामे कानि साधनानि प्रयुक्तानि? इत्यादीनां प्रश्नानां समाधानेन भारतवर्षस्य स्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलं विज्ञातुं शक्येत।

भारतीयपरम्परायां स्वाराज्यसिद्धये यथा शस्त्रस्योपकारकत्वं स्वीक्रियते तथैव शास्त्रस्यापि उपकारकत्वमङ्गीक्रियते। तद्यथा कविकुलगुरुणा महाकविकालिदासेनोक्तं रघुवंशे -

**सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम्।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता॥**[1]

भारतवर्षमिदं शस्त्रशास्त्रधारकं भवतु इति प्राचामभ्यर्थना आवेदकालादेव श्रूयते। प्राचीनकालादेव भारतीयदर्शनस्य विविधसिद्धान्तानां सम्प्रचारस्य भाषा संस्कृतमेवासीत्। भारतवर्षस्य स्वातन्त्र्यसङ्ग्रामान्दोलने संस्कृतभाषायाः महती भूमिका विद्यते। प्रत्येकं स्वातन्त्र्यवीरस्य हृदि गुञ्जायमानं वन्दे मातरम् इति गीतम् उपशतं प्रतिशतं संस्कृतेनैव विरचितं वर्तते। 1857 तमे ख्रीष्टाब्दे मंगलपाण्डेयस्य नेतृत्वे यः खलु स्वातन्त्र्याग्निः

प्रज्वलितस्तत्रापि धर्मशास्त्रीया प्रेरणा आसीदेव । महात्मागान्धि- सुभाषचन्द्रबोस्- बालगङ्गाधरतिलक-वीरसावरकरप्रभृतिवीराणां राष्ट्रनायकानां प्रेरिका श्रीमद्भगवद्गीता एवासीत् । एतेषां सर्वेषामपि महापुरुषाणां जीवने सङ्घर्षे च श्रीमद्भगवद्गीतोक्तं दर्शनं पदे पदे समन्वितं संदृश्यते ।

नाविदितं विदुषां यदस्माकं सर्वाण्यपि शास्त्राणि बन्धनमुक्तये प्रवर्तितानि सन्ति । सर्वेषामपि दर्शनशास्त्राणां परमं प्रयोजनं मुक्तिरेव विद्यते । विविधदर्शनप्रस्थानानाम् आचारमीमांसा एतदर्थमेव प्रकल्पिता वर्तते । भारतीयशास्त्रपरम्पराप्रदत्तेन संस्कारेण यस्य चेतना संस्कृता विद्यते न सः कदापि बन्धने स्थातुं शक्नोति । राष्ट्रस्य पारतन्त्र्यपाशविमोचनाय यैः वीरैः स्वप्राणाः समर्पिताः भारतीयचिन्तनपरम्परायां तेषां स्थानं परिव्राड्योगयुक्तः संन्यासी इव प्रकल्पितम् । तथा च सुभाषितं केनापि -

**द्वावेव पुरुषौ लोके सूर्यमण्डलभेदिनौ ।**
**परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥**[2]

लोके द्वौ एव पुरुषौ सूर्यमण्डलभेदिनौ उच्चतरस्थानभाजौ भवतः । योगशास्त्रानुसारेण चित्तवृत्तिनिरोधात्मकः समाधिः येन अधिगतः सः परिव्राड्योगयुक्तः आहोस्वित् सङ्ग्रामे अभिमुखः यः मृत्युमालिङ्गति सः वीरः । एतादृशजीवनदर्शनप्रतिपादकैः सुभाषितवचनैः सम्प्रेरिताः सहस्रशः युवानः भारतमातुः स्वतन्त्रतायै स्वात्मानं सगौरवं समर्पितवन्तः ।

यद्यपि स्वतन्त्रतायाः पूर्वकाले भारतीयदार्शनिकचिन्तने वेदान्तप्रभावात् आदर्शवादः प्रत्ययवादश्च दृश्यते स्म । केषाञ्चन समालोचकानां मतमस्ति यत् जगन्मिथ्यात्ववादसदृशाः सिद्धान्ताः पारमार्थिकदृशा समीचीनाः सन्तः अपि देशस्य स्वतन्त्रतायै प्रवृत्तिं न जनयन्ति स्म । किन्त्वत्र विचारणीयं सुधीभिः यद्वेदान्तदर्शने व्यावहारिकी सत्ता स्वीक्रियत एव । एकत्वमनुपश्यतः मोहशोकादिकं नास्ति चेदपि व्यावहारिकधरातले राष्ट्रस्य पारतन्त्र्यं कस्य मनः न दुनोति । राष्ट्रधर्मप्रेरणया स्वामिविवेकानन्दसदृशाः वेदान्तिनः अपि पारतन्त्र्यपाशच्छेदनाय जनान् प्रचोदयन्ति स्म ।

सर्वं दुःखमयं जगत् इत्यादीनि दार्शनिकमतानि (विशेषतः बौद्धदर्शनस्य मतानि) अवलोक्य कदाचित् शॉपेनहार (1788-1860) नैराश्यवादं प्रतिपादितवान् आसीत् । तेन प्रभावितः अलबर्ट स्वीट्जर: (Albert Schweitzer 1875-1965) 'Indian Thoughts And Its Development'[3] इत्याख्ये पुस्तके 1936 तमे वर्षे उक्तवान् यद्भारतीयदर्शनचिन्तनं मूलतः पलायनवादी विद्यते । यद्यपि तस्य मतस्य सम्यग् खण्डनं परवर्तिनि काले (1939 तमे वर्षे) भारतस्य पूर्वतन राष्ट्रपतिः दार्शनिकः विद्वान् सर्वपल्ली राधाकृष्णन्- महोदय : 'Eastern Religions And Western Thought' इति पुस्तके कृतवान् आसीत् ।[4] स्वातन्त्र्यपूर्वकाले एव भारतीयदर्शनस्य विचाराणां पाश्चात्यदार्शनिकैः सह संवादः आरब्धः आसीत् । विशेषतः दाराशिकोहस्य उपनिषदाम् प्रथमतः फारसी भाषया अनुवादेन एषः संवादः आरब्धः । एतस्य पुनः लैटिनभाषया ततश्च जर्मनभाषया कृतानुवादेन शॉपेनहार-शेलिंगप्रभृतयः दार्शनिकाः सम्प्रेरिताः आसन् । शॉपेनहारदृशा तु उपनिषदः मानवीयप्रज्ञायाः चरमोत्कर्षः (The product of the highest human wisdom) विद्यते।[5] वस्तुतः भारतस्य स्वातन्त्र्यपूर्वकाले सम्प्रवृत्तस्य दार्शनिकचिन्तनस्य कश्चन विशिष्टः प्रभावः स्वातन्त्र्यसङ्ग्रामेऽपि आसीत्। तत्रापि श्रीअरविन्द-श्रीकृष्णचन्द्रभट्टाचार्य-

भगवानदास-रानाडे-रासबिहारीदास-कृष्णमूर्ति-सुरेन्द्रनाथदास-राजाराममोहनराय-दयानन्दसरस्वती-स्वामिविवेकानन्द-महात्मागांधी-बालगङ्गाधरतिलकप्रभृतीनां दार्शनिकविचारैः स्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलं विरचितमासीत्। आलेखविस्तरभयात् स्थालीपुलाकन्यायेन द्वित्राः अंशाः अत्र विचार्यन्ते।

श्री अरविन्दघोषस्य दार्शनिकं चिन्तनं स्वातन्त्र्यसङ्ग्रामस्य पूर्वपीठिकामारचयत्। वैदिकदार्शनिकचिन्तने अभिव्यक्तः राष्ट्रवादः तस्य दर्शने अपि सर्वत्र अवलोकयितुं शक्यते। तन्मते विश्वस्मिन् विश्वे भारतीया तत्त्वदृष्टिः सफला अनुपमा च आसीत्। इतिहास-संस्कृति-योगसमन्वितेन राग-विरागयोः एकतरस्य अतिशयभावत्यागेन योगबलेन प्राप्तानुशासनेन दिव्यजीवनस्यावतरणमेव सन्दर्शनमिति प्रतिपादयता श्रीअरविन्देन वैश्विकभवितव्यतारूपेण भारतीयं स्वातन्त्र्यं प्रकलितमासीत्। भारतवर्षस्य पुनर्जागरणसन्दर्भे महतः दार्शनिकस्य श्रीकृष्णचन्द्रभट्टाचार्यस्य 1929 तमे वर्षे हुगली - महाविद्यालये युवच्छात्रेभ्यः प्रदत्तं 'स्वराज इन आइडियाज्' इति व्याख्यानमपि अत्यन्तं महत्त्वपूर्णमासीत्। तस्य स्पष्टं मतमासीद्यद्भारतीयदर्शनद्वारेणैव भारतस्यात्मानं विज्ञातुं कश्चित् शक्नुयात्। तद्यथा-

It is in philosophy, if anywhere, that the task of discovering the soul of India is imperative for the modern India; the task of achieving, if possible, the continuity of his old self with his present day self, of realising what is nowadays called the Mission of India, if it has any. Genius can unveil the soul of India in art but it is through philosophy that we can methodically attempt to discover it.

एवमेव सर्वधर्माणां मूलभूतमेकं एकत्वं निरूपयता श्रीभगवानदासेनापि 1921 तमे वर्षे कांग्रेसदलस्याधिवेशने स्वकीये प्रस्तावपत्रके यल्लोकतन्त्रात्मक-स्वराज्यस्य उच्चतरदर्शनचेतनासमन्वितं तत्त्वमभिव्यक्तं तस्य भारतीयस्वातन्त्र्यसङ्ग्रामे सुमहान् प्रभावः आसीत्। भारतरत्नविभूषितः श्रीभगवानदासः थियोसोफिकल सोसाइटी इति दर्शनसंस्थायाः सक्रियः सदस्यः दार्शनिकश्च आसीत्। धर्मदर्शनक्षेत्रे तस्य पुस्तकं 'The Essential Unity of All Religions' अतीव प्रसिद्धं वर्तते।[7]

स्वातन्त्र्यसङ्ग्रामे महात्मगान्धिनः जीवनदर्शनस्यानन्यसाधारणं योगदानं विद्यते। महात्मगान्धिनः जीवनदर्शने श्रीमद्भगवद्गीतायाः विपुलः प्रभावो वर्तते। तस्य अनासक्तियोगः अहिंसादयश्च विचाराः भारतीयदर्शनस्य आचारमीमांसायाः सारभूतानि तत्त्वानि विद्यते। 1909 तमे वर्षे प्रकाशितं तस्य 'हिंद स्वराज' इति पुस्तकं भारतीयस्वातन्त्र्यसङ्ग्रामस्य वैचारिकं धरातलमभिव्यनक्ति। तत्र यद्यपि टॉलस्टाय-रस्किन्-बॉण्डप्रभृतिपाश्चात्यविचारकाणामपि प्रभावः समालोचकैः परिदृष्टस्तथापि तत्र नरसीमेहताप्रभृतिलोकप्रसिद्धानां सन्तजनानां विचाराणामपि महान् प्रभावो दृश्यते। हिंद स्वराज इति पुस्तके भारतीयसन्तपरम्परायाः गीतादर्शनस्य सनातनभारतीयवैदिकदर्शनस्य च सारभूतं तत्त्वमेव महात्मगान्धिना प्रतिपादितम्। तन्मते धर्मानुकूलौ अर्थकामौ एव वैयक्तिकं सामूहिकं च हितं साधयितुं शक्नुतः।[9] अत्र 'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ' इत्युक्तेः सङ्गतिः दृश्यते। महात्मगान्धिनः जीवनदर्शनं सदाचारसम्पूरितं विद्यते। तद्दर्शने 'उपवासः' न केवलं शरीरस्य, न केवलं मनसः अपितु आत्मनः अपि शुद्धिं कलयति। भारतीयदर्शनपरम्परायामभिव्यक्तः कर्मवादः तस्य ग्राम-स्वराज्यस्य अवधारणायां सम्यग्रूपेण प्रतिफलितः। महात्मगान्धिना योगदर्शने सम्प्रोक्तानां मैत्रीकरुणामुदितोपेक्षाणां

चित्तपरिकर्मणां सम्प्रयोगः न केवलं चित्तशुद्ध्ये कृतमपितु एतेषां विचाराणां सङ्कीर्तनेन तेन स्वातन्त्र्यसङ्ग्रामे दत्तचित्तानां वीराणां हृदयेषु कश्चन विनूतन उत्साहोऽपि जनितः।

इत्थं साररूपेण वक्तुं शक्यते यत् श्रीअरविन्द - श्रीकृष्णचन्द्रभट्टाचार्य - भगवानदास - रानाडे - रासबिहारीदास - कृष्णमूर्ति-सुरेन्द्रनाथदास - राजाराममोहनराय-दयानन्दसरस्वती-स्वामिविवेकानन्द-महात्मागांधी-बालगङ्गाधरतिलकप्रभृतीनां दार्शनिक विचारैः भारतीयस्वातन्त्र्यसङ्ग्रामस्य दार्शनिकं धरातलं विरचितमासीत् ।

**सन्दर्भाः-**


1. कालिदासस्य, रघुवंशे, 1/19
2. सुभाषितरत्नभाण्डागारम्, पृ. सं.
3. Albert Schweitzer, Indian Thoughts And Its Development, Read Books, First Edition, 2008.
4. S. Radhakrishnan, Eastern Religions And Western Thought, Second Edition, Oxford University Press, Amen House, London E. C. 4.
5. राधावल्लभ त्रिपाठी, स्वतन्त्रता संग्राम और संस्कृत, पृ.सं. 1, न्यू भारतीय बुक कॉरपोरेशन, नई दिल्ली।
6. विश्व भारती जर्नल 20, 1954। अन्तर्जाल-लिंक https://cluelesspoliticalscientist.wordpress.com/2020/08/21/svaraj-in-ideas-krishnachandra-bhattacharyya-summary/
7. Bhagvan Das, The Essential Unity of All Religions, Bhartiya Vidya Bhavan. 1990.
8. कृष्णदत्त पालीवाल, हमारे समय में गांधी, हिंद स्वराज : गांधीजी के बीज - विचारों का खजाना, पृ. सं. 9-19, सस्ता साहित्य मण्डल प्रकाशन, नई दिल्ली, 2019
9. गिरिराज किशोर, हिंद स्वराज गांधी का शब्द-अवतार, पृ.सं. 132, सस्ता साहित्य मण्डल प्रकाशन, नई दिल्ली, 2012।



सहायकाचार्यः
सर्वदर्शनविद्याशाखा,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
जयपुरपरिसरः, जयपुरम् ।

# स्वातन्त्र्यान्दोलने संस्कृतज्ञायाः क्षमारावमहोदयायाः साहित्यिकमवदानम्

डॉ. नीरजतिवारी



स्वातन्त्र्यान्दोलने भारतदेशस्य सामान्यनागरिकाः, बालकाः, युवानः, वृद्धाः, कृषकाः, वणिजः, स्त्री-पुरुषाः, महात्मादयः, सर्वेऽपि, भागं गृहीतवन्तः। तद्वदेव भारतदेशस्य संस्कृतसाहित्यकाराः अपि स्वं स्वं साहित्यं स्वातन्त्र्यान्दोलनोपरि विरच्य स्वातन्त्र्यान्दोलनकारिणामुत्साहं वर्धितवन्तः। एषु क्रमेषु पण्डितक्षमारावमहोदयायाः स्थानं उत्कृष्टतममस्ति। आधुनिककालेऽपि संस्कृतसाहित्यं स्त्रिप्राधान्यं दृश्यते, इत्यत्र नास्ति शङ्कालेशः । एतासु प्रतिभासम्पन्नासु स्त्रिजनेषु पण्डितक्षमारावमहोदया महत्त्वपूर्णस्थानमादधाति। षण्महाकाव्यानि त्रयः कथासङ्ग्रहाः, लघुकाव्यद्वयमिति तस्याः ग्रन्थविस्तारः। स्वातन्त्र्यानूदोलनोपरि एतावद्ग्रथराशिं विरच्य संस्कृतसाहित्यमलङ्कृतमेताभिः। स्वातन्त्र्यान्दोलने संस्कृतज्ञाक्षमारावमहोदयायाः साहित्यिकमवदानमिति शीर्षकान्वितो विषयः नूनमेव अनुसन्धातॄणां कृते परमोपकारी भविष्यति।

**विषयप्रवेशः**

**कवयित्र्याः जीवनपरिचयः**

क्षमारावमहोदया महाराष्ट्रप्रदेशे कस्मिंश्चित् विद्वत्कुटुम्बे नवत्युत्तर-अष्टादशशततमे वर्षे सप्तमे मासे चतुर्थे दिनाङ्के (4-7-1890) अजायत । अस्याः पिता पण्डितः शङ्करपाण्डुरङ्गः माता च उषादेवी। यद्यपि 'पण्डिता' इत्युपाधिः एतत्कुटुम्बेन परम्परया प्राप्तः तथापि अन्वर्थश्च आसीत्। क्षमायाः तिस्रः भगिन्यः चत्वारः भ्रातरश्च आसन्। सुसंस्कृतयोः मातापित्रोः सद्गुणाः अनायासेनैव अपत्येष्वपि अनुवृत्ताः अभवन्।

शङ्करपाण्डुरङ्गमहोदयस्य संस्कृतप्रीतिः सहजा आसीत् । सा प्रीतिः तत्कालीनसाहित्ये विराजमानस्य 'आर्. जि. भण्डारकर' इति ख्यातस्य विदुषः प्रभावेण पल्लविता । पित्रा प्रभावितायां पुत्र्यां क्षमायामपि संस्कृतप्रीतिः परमोज्ज्वला आसीद् इत्यत्र किमाश्चर्यम्।

प्रतिभासम्पन्ना क्षमा विद्याभ्यासे तत्रापि भाषाभ्यासे सर्वप्रथमा आसीत् । बाल्ये अनया अधिकः कालः 'राजकोट' नगरे यापितः । तस्याः पिता बाल्ये एव दिवङ्गतः। क्षमायाः बाल्यं तु सुखकरं नासीत्। शालाभ्याससमये क्षमायाः आर्थिकस्थितिः उत्तमा नासीत्। अस्याः सकाशे तदा केवलं तिस्रः शाटिका एव आसन्। एताभिरेव शाटिकाभिः पुनः पुनः आवृतां क्षमां दृष्ट्वा तस्याः सहाध्यायिन्यः इमां 'दरिद्रा' इति उपहसन्ति स्म।

किन्तु विद्यार्जनासक्तायाः क्षमायाः तासाम् उपहासः अवधारणयोग्यो नासीत्। सर्वदा विद्यार्जने दत्तादरा एषा मेट्रिकपरीक्षायां संस्कृत-आङ्ग्लभाषयोः सर्वप्राथम्यं प्राप्तवती। तदनन्तरं विल्सन्-महाविद्यालयं प्रविष्टायाः क्षमायाः गुरुः महामहोपाध्यायः भारतरत्नमिति उपाधिभूषितः पि.वि. काणेमहाभागः आसीत्। क्षमायाः गुरुषु विद्यालङ्कारः नगप्पशास्त्री प्रमुखः। दुर्दैवाद् अस्याः विद्याभ्यासः स्थगितः अभवत्।

डॉ. राघवेन्द्रराव् इति सुप्रसिद्धेन वैद्येन सह क्षमायाः विवाहः सम्पन्नः। तदारभ्य क्षमा क्षमाराव् इति प्रसिद्धिं प्राप। भर्त्रा सह देशविदेशेषु अटन्त्याः क्षमायाः ज्ञानं विस्तृतं सञ्जातम्।

विदेशसम्पर्केण इटालियन्-फ्रेञ्च्भाषयोः अपि नैपुण्यं प्राप्तवती क्षमा। पूर्वमेव तस्याः मराठी-गुजराती-संस्कृत- आङ्ग्लभाषासु परिणतिः आसीत्। इत्थं सा क्षमा बहुभाषाभिज्ञा अभवत्।[1] सत्कार्यैः समययापनं क्षमायाः स्वभावलक्षणम् आसीत्। तदा पिता उद्योगनिमित्तं प्रवासनिरतः भवति स्म तदा क्षमा काव्यरचनाध्ययनादिषु श्लाघ्यकार्येषु कालं नापयन्ती आसीत्। क्षमामहाभागा जीवनान्तं यावत् काव्यस्य निर्माणे मग्ना आसीत्। सा देहत्यागात् 1954 ईस्वीयतमे वर्षे केवलं सप्ताहात् पूर्वमेव 'ज्ञानेश्वरचरितम्' इति महाकाव्यं समाप्य निर्वाणं गता।[2]

**स्वातन्त्र्यान्दोलने सहभागिता -**

पण्डिता क्षमारावमहोदया यदा सा स्वविद्याभ्यासं वा अध्ययनं समापयामास तदा भारते स्वातन्त्र्यसङ्ग्रामः पराकाष्ठतां गत आसीत्।

महात्मागान्धीमहोदयः स्वातन्त्र्यसङ्ग्रामसेनानी भूत्वा अखिलं देशं पारतन्त्र्यात् विमोचयितुं सर्वान् प्रचोदयति स्म । प्रायशः तत्काले महात्मनः गान्धीमहोदयस्य प्रभावलये अनन्तर्गतः कोऽपि भारतीयः नासीत् । सूक्ष्मसंवेदिनां पुरुषाणां स्वातन्त्र्यसङ्ग्रामभूमिप्रवेशः परमश्रेष्ठं कर्तव्यम् एव आसीत् । पण्डिता क्षमापि गान्धीमहोदयस्य विचारैः तीव्रतया आकृष्टाऽऽसीत्। भारतं पारतन्त्र्यात् विमोचयितुं **'भूमिमवतीर्णः देवः एव गान्धी'** इत्येव क्षमायाः दृढनिश्चयः आसीत् । तस्याः कृतिषु गान्धीजीवनं तद्विचाराश्च प्रमुखतया वर्णिताः । तस्मिन्नेव समये गान्धीमहोदयं सा **'साबरमती आश्रमे'** दृष्टवती।[3]

**साहित्यकमवदानं कृतयश्च -**

पण्डितामहोदयायाः द्वादशकृतयः साम्प्रतिके उपलभ्यन्ते। तासु सत्याग्रहगीता, उत्तरसत्याग्रहगीता, शंकरजीवनाख्यानम्, श्रीतुकारामचरितम्, श्रीरामदासचरितम्, स्वराज्यविजयः, इत्यादीनि षट् महाकाव्यानि। श्रीज्ञानेश्वरचरितम् मीरालहरी च तया विरचिते खण्डकाव्ये। ग्रामज्योतिः, कथापञ्चकं, कथामुक्तावली, विचित्रपरिषद्यात्रा इत्यादयाः अन्याः सन्ति।[4]

**क्षमारावमहोदयायाः साहित्य समीक्षणम् -**

पण्डिताक्षमारावमहोदया 1931 तमे ईस्वीयवर्षे गान्धीमहोदयस्य दाण्डीमार्चेन प्रेरितो भूत्वा श्रीमद्भगवद्गीतावद् अष्टादशाध्यायेषु अष्टापञ्चाशदधिकं षट्शतसंख्याकं (658) श्लोकसमन्वितं सत्याग्रहगीतानामकं काव्यं रचितवती। परन्तु भारते ब्रिटिशशासनकारणाद् अद्भूतं ग्रन्थमिदं 1931 तमे ईस्वीयवर्षे नैव मुद्रणं जातम् । वर्षान्तरे 1932 तमे ईस्वीयवर्षे संस्कृतस्य पाश्चात्यविदुषः सिल्वालेहवीमहोदयस्य सहयोगेन पेरिसदेशतः प्रकाशितोऽभवत्।[5]

अनया तस्मिन् काव्ये अष्टादशाध्यायेषु सत्याग्रहस्येतिहासः तदपेक्षया च गान्धिमहोदयस्य जीवनवर्णनमपि कृतम्। आफ्रिकादेशादारभ्य लवणसत्याग्रहं यावत्, मोहमयीप्रभृतिनगरेषु च जातस्य वैदेशिकानामत्याचारस्य सजीवं प्रत्यक्षमिव चित्रं चित्रितम्। रचना व्यासवाल्मीकिसरणिमनुसरन्ती सरलसरला, प्रसन्नमधुरा, मसृणमसृणा पाठकानां हृदयङ्गमा आकर्षणकारिणी च विद्यते।

पण्डितामहोदयया स्वात्मनिष्ठदेशभक्ति-भावनायाः प्रेरणायाश्च अस्य काव्यस्य सर्जना कृताऽस्तीति स्वयमेव काव्ये विलिखिता -

**तथापि देशभक्त्याहं जातास्मि विवशीकृता। अत एवास्मि तद्गातुमुद्यता मन्दधीरपि ।।**[6]

सत्याग्रहगीतायाः प्रथमतः पञ्चामाऽध्यायपर्यन्तं राष्ट्रस्य समकालिनस्यस्थितेः वर्णनं वर्तते। तत्रादौ प्रथमाध्याये आङ्ग्लशासकानामधिने राष्ट्रं दृष्ट्वा कवयित्री लिखति स्वमातृभूमेः पराधीनतायाः एव भारतीयानां जनानां हीनता, दरिद्रता, इत्यादयः दुःखाणामेवं दोषाणां मूलकारणं वर्तते । अनेन उन्मुक्तायाः राष्ट्रियस्वाधीनतायाश्च कृते इमे संदेशाः काव्यमाध्यमेन प्रदत्ताः। सत्याग्रहगीतायाः स्वातन्त्र्यान्दोलनविषयकानि कानिचिद् प्रारम्भिकाणि पद्यानि इमानि सन्ति -

**आंग्ललोकान् स विज्ञाप्य भारतीयपरिस्थितिम्। अल्पं फलागमं दृष्टा व्यसृजद्देशमाङ्गलम् ।।**
**प्रौढेन वयसा युक्तोऽप्यानतः क्लेशसञ्चयैः। न्यवर्तत निजं देशं दीनं दुभिक्षपीडितम् ।।**
**ग्रामीणानां क्षुधार्तानां क्षेत्रे क्षेत्रेऽपि निर्जले। दृष्टास्थिपञ्जरान् भीमान् विषण्णोऽभूद्दयाकुलः ।।**
**इतरैरवधूतानामन्त्यजानामवस्थया। द्रवीभूतो महात्मासौ दीनानां गौतमो यथा।**
**निर्धनत्वाज्जनुर्भूमेः पारवस्याच्च बान्धवाः। तिरस्कृता भवन्तीति प्राज्ञेन किल निश्चितम् ।।**
**वयमाङ्ग्लयुगे बद्धा भविष्यामोऽधिकाधिकम् । विवशा दुर्बलाश्चेति बोधितं दूरदर्शिना ।।**
**इहाङ्ग्लैः स्थापितं राज्यं देशलुण्ठनलोलुपैः । इत्यस्थिपञ्जरा एव जनानामत्र साक्षिणः ।।**
**अहो घोरमिदं पापमोदासीन्यं जनेषु वः । भोगैश्वर्यप्रसक्तानामतिनिन्द्यं यशोहरम् ।।**
**किमुत्तरं कृतीनां वः परलोके प्रदास्यथ । इति राज्याधिकारस्थानपृच्छद्वीरचेतनः ।।**
**स्वबान्धवानसौ पौरामोहसुप्तानबोधयत् । स्वधर्मः परमो धर्मो न त्याज्योऽयं विपद्यपि।**
**कर्षकाणां स्थितिं तेषां कष्टमूलं च वेदितुम् । त्यक्तभोगो विपद्बन्धुग्रामे चचार सः ।।**
**अनादृष्टया हते शस्ये दुर्भिक्षं समजायत । तस्मादथ कराधिक्याद्दीनानां कष्टसम्भवः ।।**
**मासषट्कं निरुद्योगा निवसन्ति कृषीवलाः । अत एव हि संवृद्धिर्दारिद्र्यस्य पदे पदे ।।**
**विधेयं तान्तवं तस्मादल्पलाभमपि ध्रुवम् । येन सुष्टुपयोगः स्यात्कालस्येति जगाद सः ।।**
**कुर्वन्तो नित्यमेवं हि स्वातन्त्र्यं प्राप्स्यथाचिरात् । स्वातन्त्र्यादि मनुष्याणां प्रियमन्यन्न विद्यते।**
**अथ चेत्तान्तवं धर्म्यं न करिष्यथ बान्धवाः। बद्धाः परयुगे नित्यं दासभावे निवत्स्यथ ।।**
**जीवन्तोऽपि न जीवन्ति परदास्यधुरन्धराः । पारतन्त्र्यमुदाराणां मरणादतिरिच्यते ।।**
**दासभावे स्थितैः कष्टं सोढन्यमतिदुस्सहम् । दासोऽश्नाति स्वकं खाद्यं काकशङ्की पदे पदे ।।**
**उत्तिष्ठत ततः शीघ्रं तान्तवे कुरुतोद्यमम् । पटकारो जनो येन प्रतिपद्येत तत्फलम् ।।**
**हस्तनिर्मितवासांसि प्राप्स्यत्येवं जनोऽखिलः। ततो देशोदयप्राप्तिरिति भूयो न्यवेदयत् ।।**[7]

कवयित्री उपर्युक्तपद्यांशेन स्वान्त्र्यान्दोलनाय सुष्ठुतया जन-जागरणं करोतीति।

अत्र सम्पूर्णसत्याग्रहगीतायाः प्रतिपाद्यविषयाणां प्रतिपादनं सम्भवं नास्ति अतः सम्पूर्णसत्याग्रहगीतायाः विषयाणां समास इत्येवं विचार्यते । तद्यथा - प्रथमेऽध्याये नवत्रिंशत्श्लोकै राष्ट्रस्य समकालिनस्यस्थितेः वर्णनम्,

द्वितीयाऽध्याये षट्चत्वारिंशत् श्लोकैः राष्ट्रस्य समकालिनस्थितेः वर्णनम्, तृतीयेऽध्याये एकत्रिंशत् श्लोकैः राष्ट्रस्य समकालिनस्थितेः वर्णनम्, चतुर्थेऽध्याये सप्तविंशतिः श्लोकैः राष्ट्रस्य समकालिनस्थितेः वर्णनम्, पञ्चमेऽध्याये चत्वारिंशत् श्लोकैः राष्ट्रस्य समकालिनस्थितेः वर्णनम्, षष्ठेऽध्याये द्वाविंशतिः श्लोकैः समकालिनस्थितेः वर्णनम्, सप्तमेऽध्याये नवविंशतिः श्लोकैः समकालिनस्थितेः वर्णनम्, अष्टमेऽध्याये षड्विंशतिः श्लोकैः साइमनकमीशनवर्णनम्। नवमेऽध्याये षोडशश्लोकैः वायसरायइरविनस्य घोषणावर्णनम्, दशमेऽध्याये सप्तचत्वारिंशत् श्लोकैः वायसरायइरविनकृते गान्धेःपत्रप्रेषणम्, एकादशेऽध्याये त्रिंशत्श्लोकैः दाण्डीयात्रा, द्वादशेऽध्याये चतुर्पञ्चाशत् श्लोकैः संगठनम्, त्रयोदशेऽध्याये पञ्चचत्वारिंशत् श्लोकैः उत्तर-पूर्वसीमान्तराज्यानां स्वतन्त्रतान्दोलने विशदीकरणम्, चतुर्दशेऽध्याये षट्त्रिंशत् श्लोकैः पञ्चदशेऽध्याये अष्टाविंशतिः श्लोकैः षोडशेऽध्याये द्वात्रिंशत् श्लोकैः च गान्धेः औपनिवेशिकशासकद्वारा कृतमत्याचारवर्णनम्, सप्तदशेऽध्याये सप्ततिः श्लोकैः भारतदेशस्य स्त्रीस्वातन्त्र्यसेनानीवर्णनम्, अष्टादशेऽध्याये एकोनविंशतिः श्लोकैः महात्मागान्धीमहोदयेन साकं क्षमारावस्य मेलनादिकं विषयाणां विवेचनं वर्तते।[8]

**उत्तरसत्याग्रहगीता**

उत्तरसत्याग्रहगीता सत्याग्रहगीतायाः निरन्तरता अस्ति। ग्रन्थोऽयं सप्तचत्वारिंशत् 47 अध्यायेषु विभक्तं वर्तते। उत्तरसत्याग्रहगीतायाः रचना मई 1944 ईश्वीयतमे वर्षात् सितम्बर 1944 ईश्वीयतमे वर्षे कृता। ग्रन्थमिदं अप्रैल 1948 ईश्वीयतमे वर्षे प्रकाशितं जातम्। ग्रन्थेऽस्मिन् सप्तचत्वारिंशत् अध्यायेषु एकं न्यूनं द्विसहस्रपरिमितं (1999) श्लोकेन 1931 ईश्वीयवर्षादारभ्य 1944 ईश्वीयवर्षं यावत् महात्मागान्धेः सत्याग्रहात्मकं स्वान्त्र्यान्दोलनसम्बन्धीनि विषयाः विवेचिताः सन्ति। उत्तरसत्याग्रहगीतायाः विषयाः इमानि सन्ति । तद्यथा -

प्रथमेऽध्याये द्वात्रिंशत् श्लोकैः गान्ध्यविन्सन्धियमवर्णनम्। द्वितीयाऽध्याये षट्त्रिंशत् श्लोकैः लण्डनप्रस्थानम्, तृतीयेऽध्याये द्विपञ्चाशत् श्लोकैः चक्रगोष्ठिविजृम्भणम्, चतुर्थेऽध्याये षट्त्रिंशत् श्लोकैः भूमिकरस्यावितरणम्। पञ्चमेऽध्याये एकादश श्लोकैः दिल्लीक्षणिकसभायाः घोषणा, षष्ठेऽध्याये अष्टादशश्लोकैः सल्याग्रहस्य निरोधनम्, सप्तमेऽध्याये चतुर्चत्वारिंशत् श्लोकैः श्वेतपत्रपरिवर्तने प्रयतनम्, अष्टमेऽध्याये पञ्चविंशतिः श्लोकैः अस्पृश्यतायाः निर्मूलनम्।

नवमेऽध्याये ऊनविंशतिः श्लोकैः मदनमोहनमालवीयस्य प्रघर्षणम्, दशमेऽध्याये विंशतिः श्लोकैः गान्धेत्रिसाप्ताहिकोपोषणम्, एकादशेऽध्याये चतुर्दशश्लोकैः सामूहिकसत्याग्रहस्य प्रतिषेधः, द्वादशेऽध्याये पञ्चत्रिंशत् श्लोकैः भूकम्पविष्टवः, त्रयोदशेऽध्याये चतुर्षष्टिः श्लोकैः न्यायविधायकसभायां राष्ट्रसहप्रवेशः, चतुर्दशेऽध्याये पञ्चविंशतिः श्लोकैः शासनभहस्य निषेधः, पञ्चदशेऽध्याये सप्तदशश्लोकैः गान्धे राष्ट्रसङ्घान्निर्गमनम्। षोडशेऽध्याये विंशतिः श्लोकैः गान्धेः स्वध्येयप्रपञ्चः, सप्तदशेऽध्याये नवाशीतेः श्लोकैः ग्रामवासस्य घोषणम्, अष्टादशेऽध्याये षष्टिः श्लोकैः ग्रामसेवायाः प्रारम्भणम्, एकोनविंशेऽध्याये पञ्चपञ्चाशत् श्लोकैः परदेशीययात्रिकेन सह संवादः, विंशतेऽध्याये षष्ठाधिकएकशतं श्लोकैः विदेशीयसन्नार्या सह संलपनम्।

एकविंशेऽध्याये द्विसप्ततिः श्लोकैः राष्ट्रभाषाया विमर्शः, द्वाविंशेऽध्याये षष्टिः श्लोकैः शार्मण्यदेशीयेन सह संवादः, त्रयोविंशेऽध्याये षट्पञ्चाशत् श्लोकैः मन्त्रिमण्डलस्यानुशासनम्, चतुर्विंशेऽध्याये त्रिपञ्चाशत् श्लोकैः

मन्त्रिभ्यो निबोधनम्, पञ्चविंशेऽध्याये त्रिषष्टिः श्लोकैः हरिपुरे राष्ट्रसङ्गस्य सम्मेलनम्, षड्विशेऽध्याये पञ्चाशत् श्लोकैः सभात्यागसाहसम्। सप्तविंशेऽध्याये सप्तदशाधिकएकशतं श्लोकैः राजदुर्गविवादः, अष्टाविंशेऽध्याये विंशतिः श्लोकैः प्रायोपवेशनस्य रहस्यप्रकाशः, नवविंशेऽध्याये द्वाविंशतिः श्लोकैः ठेवालयानानुद्घाटनम्, त्रिंशेऽध्याये अष्टाविंशतिः श्लोकैः चम्पारण्ये कृषीवलोद्बोधनम्, एकत्रिंशेऽध्याये नवपञ्चाशत् श्लोकैः वृन्दावनप्रसङ्गवर्णनम्।

द्वात्रिंशेऽध्याये चतुर्चत्वारिंशत् श्लोकैः राष्ट्रीय ध्वजनिर्णयः, त्रयस्त्रिंशेऽध्याये अष्टाविंशतिः श्लोकैः पाधायदेशीययुद्धस्य प्रारंभः, चतुस्त्रिंशेऽध्याये चतुर्पञ्चाशत् श्लोकैः पटीयालानरेशस्य सान्त्वनम्, पञ्चत्रिंशेऽध्याये एकत्रिंशत् श्लोकैः पोलण्डदेशीयनायकस्य सान्त्वनम्, षट्त्रिंशेऽध्याये पञ्चचत्वारिंशत् श्लोकैः स्वीयलक्ष्याणां समुत्तेजनम्, सप्तत्रिंशेऽध्याये षट्चत्वारिंशत् श्लोकैः मूलस्तम्भचतुष्टयख्यापनम्।

अष्टत्रिंशेऽध्याये षड्विंशतिः श्लोकैः शान्तिनिकेतनागमनम्, नवत्रिंशेऽध्याये पञ्चत्रिंशत् श्लोकैः महायुद्धस्य निराकरणम्, चत्वारिंशेऽध्याये एकपञ्चाशत् श्लोकैः रामगढप्रदर्शनम्, एकचत्वारिंशेऽध्याये षट्पञ्चाशत् श्लोकैः मुग्धप्रबोधनम्, द्वाचत्वारिंशेऽध्याये सप्तविंशतिः श्लोकैः शासनोपहारनिराकरणम्, त्रिचत्वारिंशेऽध्याये अष्टाविंशतिः श्लोकैः मुक्तभारतमिति निर्घोषणम्, चतुश्चत्वारिंशेऽध्याये अष्टात्रिंशत् श्लोकैः वनदेशीय महादुर्भिक्षम्। पञ्चचत्वारिंशेऽध्याये पञ्चचत्वारिंशत् श्लोकैः मिथ्याभिशंसनम्, षट्चत्वारिंशेऽध्याये षट्चत्वारिंशत् श्लोकैः जिन्नागान्धिसमागमः, सप्तचत्वारिंशेऽध्याये एकविंशतिः श्लोकैः गान्धिजन्मोत्सवप्रस्तावादि विषयाणां सविशदं वर्णनं लभ्यते।[10]

**स्वराज्यविजयः**

स्वराज्यविजयः महाकाव्यमिदं उत्तरजयसत्याग्रहगीता नाम्नापि प्रसिद्धम्। अस्मिन् महाकाव्ये चतुर्पञ्चाशत् अध्यायाः एवं 1740 श्लोकाः सन्ति। अस्य काव्यस्य लेखनं तु 1949 तमे ईश्वीयवर्षे जातम्। परन्तु मुद्रणं 1962 तमे ईश्वीयवर्षे सम्पन्नमभवत्।[11] देशस्य विभाजनविषये गान्धीजिन्नाचर्चातः गान्धीमहोदयस्य निर्वाणपर्यन्तं महत्त्वपूर्णाः घटनाः अस्मिन्महाकाव्ये वर्णिताः। अस्य काव्यस्याऽध्याये प्रतिपाद्यविषयाः इत्थं वर्तन्ते । तद्यथा -

प्रथमेऽध्याये 43 श्लोकैः देशखण्डनवर्णनम्। द्वितीयेऽध्याये 20 श्लोकैः सेवाग्रामवृत्तवर्णनम्। तृतीयेऽध्याये 18 श्लोकैः सत्याग्रहोपदेशवर्णनम्। चतुर्थेऽध्याये 17 श्लोकैः विश्वयुद्धसमाप्तिवर्णनम्। पञ्चमेऽध्याये 30 श्लोकैः शान्तिसन्देशवर्णनम्। षष्ठेऽध्याये 19 श्लोकैः केवलोपन्यासवर्णनम्। सप्तमेऽध्याये 19 श्लोकैः शिमलासमेलनं वर्णनम्। अष्टमेऽध्याये 31 श्लोकैः बन्दीमोक्षवर्णनम्। नवमेऽध्याये 27 श्लोकैः हिन्दसैनिकवधमोचनवर्णनम्। दशमेऽध्याये 33 श्लोकैः **गान्धिवंगाधिप-संलापवर्णनम्।**

एकादशेऽध्याये 32 श्लोकैः आन्ध्रुस्मारकस्थापनवर्णनम्। द्वादशेऽध्याये 18 श्लोकैः आन्धुस्तवनवर्णनम्। त्रयोदशेऽध्याये 30 श्लोकैः छात्रसंदेशवर्णनम्। चतुर्दशेऽध्याये 52 श्लोकैः हरिजनशिक्षावेश्मोद्घाटनवर्णनम्। पञ्चदशेऽध्याये 38 श्लोकैः नाविककार्यनिग्रहवर्णनम्। षोडशेऽध्याये 25 श्लोकैः मसूरीयात्रावर्णनम्। सप्तदशेऽध्याये 43 श्लोकैः पल्लीग्रामसम्मेलनवर्णनम्। अष्टादशेऽध्याये 30 श्लोकैः रामनाममहिमावर्णनम्। नवदशेऽध्याये 39 श्लोकैः हरिजनसहवासानुमोदनवर्णनम्। विंशेऽध्याये 40 श्लोकैः गान्धिनिमन्त्रणवर्णनम्।

एकविंशेऽध्याये 26 श्लोकैः मन्त्रिसमन्त्रणवर्णनम्। द्वाविंशेऽध्याये 27 श्लोकैः मन्त्रिसन्धानवैकल्यवर्णनम्। त्रयोविंशेऽध्याये 15 श्लोकैः रामराज्यवर्णनम्। चतुर्विंशेऽध्याये 31 श्लोकैः नवविधानवर्णनम्। पञ्चविंशेऽध्याये 26 श्लोकैः मसूरीयात्रावर्णनम्। षड्विशेऽध्याये 35 श्लोकैः मन्त्रिनियोजनवर्णनम्। सप्तविंशोऽध्याये 49 श्लोकैः आकस्मिकोद्घातवर्णनम्। अष्टाविंशेऽध्याये 40 श्लोकैः कलकत्ताविप्लववर्णनम्। एकोनत्रिंशेऽध्याये 17 श्लोकैः श्रीगान्धिजन्मोत्सववर्णनम्। त्रिंशेऽध्याये 41 श्लोकैः विदर्भविप्लववर्णनम्।

एकत्रिंशेऽध्याये 22 श्लोकैः श्रीगान्धेःकलकत्ताप्रस्थानवर्णनम्। द्वात्रिंशेऽध्याये 27 श्लोकैः गान्धिप्रघर्षणवर्णनम्। त्रयस्त्रिंशेऽध्याये 28 श्लोकैः नवखालीप्रयाणवर्णनम् । चतुर्विंशेऽध्याये 50 श्लोकैः वङ्गग्रामपर्यटनवर्णनम्। पञ्चत्रिंशेऽध्याये 30 श्लोकैः गान्धिप्रयासवर्णनम्। षट्त्रिंशोऽध्याये 31 श्लोकैः ग्रामपर्यटनवर्णनम्। सप्तत्रिंशेऽध्याये 56 श्लोकैः राधामुकुन्दमूर्तिस्थापनवर्णनम्। अष्टात्रिंशेऽध्याये 35 श्लोकैः ग्रामाटनवर्णनम्। नवत्रिंशेऽध्याये 32 श्लोकैः स्वराज्योद्घोषणावर्णनम्। चत्वारिंशेऽध्याये 73 श्लोकैः आसिमासम्मेलने गान्धिप्रवचनवर्णनम्।

एकचत्वारिंशेऽध्याये 48 श्लोकैः कोराणपठनाक्षेपनिरासवर्णनम्। द्वाचत्वारिंशेऽध्याये 17 श्लोकैः राम-रहीमसाम्यनिदर्शनवर्णनम्। त्रयश्चत्वारिंशेऽध्याये 23 श्लोकैः महात्मानुशासनवर्णनम्। चतुश्चत्वारिंशेऽध्याये 15 श्लोकैः गान्धेरनुशासनवर्णनम्।

पञ्चचत्वारिंशेऽध्याये 27 श्लोकैः लोकसान्त्वनवर्णनम्। षट्चत्वारिंशेऽध्याये 16 श्लोकैः देशखण्डनवर्णनम्। सप्तचत्वारिंशेऽध्याये 18 श्लोकैः काश्मीरप्रस्थानवर्णनम्। अष्टचारिंशेऽध्याये 15 श्लोकैः स्वराज्यलाभवर्णनम्। नवचत्वारिंशेऽध्याये 29 श्लोकैः दिल्लीविप्लववर्णनम्। पञ्चाशेऽध्याये 26 श्लोकैः शरणार्थिसान्त्वनवर्णनम्।

एकपञ्चाशेऽध्याये 34 श्लोकैः अन्तिमप्रायोपवेशनवर्णनम्। द्वापञ्चाशेऽध्याये 32 श्लोकैः श्रीगान्धेरुपरिबम्भास्त्रक्षेपवर्णनम्। त्रिपञ्चाशेऽध्याये 87 श्लोकैः महात्मनो निर्वाणवर्णनम्। चतुर्पञ्चाशेऽध्याये 14 श्लोकैः ग्रन्थोपसंहारवर्णनमित्यादयश्च प्रतिपादिताः सन्ति।[12]

**शंकरजीवनाख्यानम् -**

शङ्करजीवनाख्यायीनं शङ्करपाण्डुरङ्ग पण्डित इति क्षमादेव्याः पितुर्नाम । संस्कृतस्य गंभीराध्ययनेन प्राप्तपाण्डित्येन कुलनाम यथार्थतां नीतं तेन। अस्य काव्यस्य प्रकाशनं स्वयमेव लेखिका पण्डिता महोदयाः 1939 ईश्वीयतमेवर्षे 27 न्यूमरीनलेन, बम्बईतः कृता आसीत्। अस्मिन् ग्रन्थे 17 उल्लासाः तथा 840 श्लोकाः सन्ति।[13]

संस्कृतपण्डितानां विषये तस्य मनस्यत्यन्तादर आसीत्। अतः तान् गृहमामन्त्र्य सः सत्करोति स्म। प्रकृत्या बुद्धिमती क्षमादेवी संस्कृतविदुषां पाण्डित्येन सुसंस्कारिता। संस्कृताध्ययनस्य पैतृकं धनमग्रे नयन्ती सा स्वप्रतिभया साहित्यनिर्मितिं कर्तुमपि समर्था जाता।

अस्मिन् ग्रन्थे क्षमादेव्या स्वपितुश्चरितमनुष्टुभछन्दसि वर्णितमस्ति। वस्तुतस्तु शङ्करजीवनाख्यायीनं महाकाव्यमिदं पण्डितशङ्करपाण्डुरङ्गमहोदयस्य जीवनोपरि वर्तते। तथापि काव्येऽस्मिन् यत्र-तत्र आङ्गलशासकाणां कुत्सितं विचारं चरित्रमवलम्ब्य च स्वातन्त्र्यान्दोलनविषयिणी चर्चा लभ्यते।[14]

**श्रीतुकारामचरितम् -**

सन्तजनेषु प्रीतिः भाक्तिश्च क्षमादेव्या अन्यदेकं महत्त्वपूर्णं वैशिष्ट्यम्। अत एव तया महाराष्ट्रेषु सम्भूतान् सन्तजनानधिकृत्य परमभक्त्या महाकाव्यानां रचनाः कृताः। तुकारामचरितम् काव्यं नवसर्गेषु 435 पद्येषु समलङ्कृतं वर्तते। अस्य काव्यस्य लेखनं तु 1947 ईश्वीयतमेवर्षे जातम्, कालक्रमेण अस्य प्रकाशनं ग्रन्थरूपेण 1950 ईश्वीयतमेवर्षे अभवत्।[15]

वस्तुतः महाकाव्यमिदं महाराष्ट्रस्य सन्तकविः तुकाराममहोदयस्य जीवनचरितमङ्गीकृत्यं तेषां भक्ति-भावनामङ्गीकृत्यलिखितमस्ति। तथापि काव्येऽस्मिन् स्थलद्वये छत्रपतिशिवाजीमहाराज्ञस्य वर्णनेन राष्ट्रप्रेमस्य चर्चा आयाति । एतस्मात् कारणात् राष्ट्रीया भावना मूलकं काव्यमिदं कथयितुं शक्यते।[16]

**श्रीरामदासचरितम् -**

श्रीरामदासचरितं काव्यं सन्तसमर्थरामदासचरितमाश्रित्य व्यलेखि। काव्येऽस्मिन् त्रयोदशसर्गाः 674 श्लोकाः वर्तन्ते।अस्य प्रथमं प्रकाशनं 1953 ईश्वीयतमेवर्षे अभवत्। ऐषु त्रयोदश सर्गेषु संतश्रीरामदासस्य भक्तिमयं उदगारं तस्य देशाटनवृतान्तं व्यक्तं वर्तते। परन्तु काव्येऽस्मिन् स्वातन्त्र्यान्दोलनविषयि वर्णनमपि प्रचुरतया लभ्यते।[17]

**विचित्रपरिषद्यात्रा -**

विचित्रपरिषद्यात्रा ख्रिस्ताब्दस्य 1939 मध्ये त्रिवेन्द्रमित्यत्र राष्ट्रियप्राच्यविद्यापरिषद् आयोजितासीत् तस्याः व्यङ्ग्यपूर्णं वर्णनमस्मिन् काव्ये कृतमस्ति।[18] अस्य लघुपुस्तकस्यान्ते संस्कृतप्रचारविषये तया एवं प्राथ्यर्ते -

**संस्कृताधीतिनः सन्तु सर्वे भारतभूमिजाः ।**
**संस्कृतेनैव कुर्वन्तु व्यवहारं परस्परम् ।।**
**संस्कृतज्ञानमासाद्य संस्कृताचारवृत्तयः ।**
**सर्वतः संस्कृतीभूय सुखिनः सन्तु सर्वतः ।।**[19]

एवं सततसंस्कृताध्ययनशीला क्षमा अस्माभिः आदरणीया अनुकरणीया च वर्तते।

**मीरालहरी -**

पण्डिता महोदया मीरालहरीनामके खण्डकाव्ये श्रीकृष्णभक्ता मीरायाः या भक्तिः श्रीकृष्णं प्रति आसीत् तां भक्तिमित्यादि गुणानामङ्गीकृत्यखण्डकाव्यमिदं प्रणीतवान्।[20]

**ग्रामज्योतिः -**

ग्रामज्योतिः 1954 ईश्वीयतमेवर्षे रचितं कथात्रयात्मको ग्रन्थः। त्रयाणां भारतीयग्रामस्त्रीरत्नानां प्रबुद्धचरितोपवर्णनेन सुप्तराष्ट्रप्रबोधनं साम्प्रतिकं प्रख्यापयति। अयमद्यापि न प्रकाशितः।[21]

**कथापञ्चकम् -**

कथापञ्चकं बालिकोद्वाहसङ्कटम्, गिरिजायाः प्रतिज्ञा, हरिसिंहः, दन्तकेयूरम्, असूयिनी इति पञ्चभिर्विचित्रलघुकथाभिः संवलितोऽयं ग्रन्थः। अनुष्टुपा सरससुमनोहरैर्वचनकुसुमैर्गुम्फिता कथामालि केयं भरतखण्डे प्रजानां लौकिकं अलीकं च जीवनचरितं प्रकाशयन्ती पाठकानां कण्ठमलङ्करोति। सरणिश्च हृदयङ्गमं कमपि विशेषं पुष्यति। तथा हि कथायाः सहसोपक्रमः, लाक्षणिकप्रयोगाणां सौन्दर्यं, गुप्तकथांशानां क्रमविकासकारिणी संविधा

नवैचित्री कथायाः पराकाष्ठा तदनु प्रसह्यान्तगमनं चेत्यादयो गुणाः प्रत्यक्षीभवन्ति। पाश्चात्यकवीनां लघुकथाप्रणयनसरणिमनुरुन्धाना कृतिरियं शुद्धसंस्कृतमयी सहृदयानां चित्तमावर्जयतीति वयं प्रतीमः।[22]

**कथामुक्तावली -**

काव्येऽस्मिन् लेखिकायाः रचितसामान्यकथायाः सग्रंहो वर्तते । कथामुक्तावल्यामुल्लेखिता पञ्चदशकथा निम्नाः सन्ति । यथा - 1. प्रेमरसोद्रेकः 3. तापसस्य पारितोपिरम् 4. परित्यक्ता 5. मिथ्याग्रहणम् 6. वृत्तशंसिच्छवम् 7. हँससमाधिः 8. मायाजालम् 8. स्वामिकव्यामोहः 9 . नजमदिलेलः 10. विधवोहाइसङ्कटम् 11. क्षणिकविश्रमः 12. निशीथवलिः 13. मत्स्यजीवी केवलम् 14. आत्मनिर्वासनम् 15. शरद्दलम् इति।[23]

**उपसंहारः**

स्वातन्त्र्यान्दोलने भारतदेशस्य सर्वे जनाः स्व-स्व शक्त्यानुसारं स्वातन्त्र्यान्दोलने भागं गृहीतवन्तः। एषु क्रमेषु एव संस्कृतज्ञा पण्डिताक्षमारावमहोदयायाः अपि साहित्यं विरच्य जन जागरणमकरोत्।

क्षमारावमहोदया सत्याग्रहगीतानामनि ग्रन्थेऽस्मिन् भारतदेशे महात्मना गान्धिना प्रवर्तितं निरुपमं सत्याग्रहयुद्धं गीयते। महाभारतान्तर्गतायां भगवद्गीतायामिवात्रश्लोकमया अष्टादशाध्यायाः सन्ति । यथा भारते पाण्डवानां जन्मसिद्धस्याप्यधिकारस्य निरोधः प्रतिपक्षैः स्वार्थपरैः कृतस्तथा भारतीयानामाजन्मसिद्धस्वतायाः प्रत्याख्यानमाङ्ग्लसाम्राज्यप्रचालकैः कृतमिति द्वयोरपि समानो युद्धहेतुः। ललितमधुरा सरलसुबोधा च हृदयग्राहिणी प्रबन्धस्य सरणिः। ऐतिहासिकोऽयं ग्रन्थः स्त्रियापि गैर्वाण्यां व्यरचीति नितरामभिनन्दनीया कवयित्री।

उत्तरसत्याग्रहगीता सत्याग्रहगीतायाः निरन्तरता अस्ति। सप्तचत्वारिंशद्ध्यायेषु ग्रन्थेऽस्मिन् एकं न्यूनं द्विसहस्रपरिमितं श्लोकैः सकलहृदयमनोग्रहिणी स्वान्त्र्यानदोलनसम्बन्धिविषयाः विवेचिताः सन्ति। स्वराज्यविजयम् महाकाव्यं उत्तरजयसत्याग्रहगीता नाम्नापि प्रसिद्धम्। चतुर्पञ्चाशत् अध्यायेषु देशस्य विभाजनविषये गान्धीजिन्नाचर्चातः गान्धीमहोदयस्य निर्वाणपर्यन्तं महत्त्वपूर्णा: घटनाः अस्मिन्महाकाव्ये वर्णिताः।

शङ्करजीवनाख्यानं स्वपितुर्जीवनचरितोल्लेखनात्मकं रमणीयं सप्तदशोवाससमुपेतं छन्दोमयं काव्यम्। सन्तजनेषु प्रीतिः भक्तिश्च क्षमादेव्या अन्यदेकं महत्त्वपूर्णं वैशिष्ट्यम् । अत एव तया महाराष्ट्रेषु सम्भूतान् सन्तजनानधिकृत्य परमभक्त्या महाकाव्यानां रचनाः कृताः। स्वातन्त्र्यान्दोलने निरतानां सन्तानामुपरि श्रीरामदासचरितं, ज्ञानेश्वरचरितं तुकारामचरितंश्चैतानि महाकाव्यानि रचितान्याङ्ग्लानुवादेन सह प्रकाशितानि च। कथापञ्चके पञ्चभिर्विचित्रलघुकथाभिः लौकिकं अलौकिकं च जीवनचरितं प्रकाशयन्ती पाठकानां कण्ठमलङ्करोतीति। विचित्रपरिपद्यात्रा लघुपुस्तिकेयमनन्तशयने अनतिपूर्व प्रवृत्तं खिलराष्ट्रीयप्राच्यभाषापरिपत्संमेलनं प्रति मोहमयीनगराद्गतवत्या ग्रन्थका यद्यद्दृष्टश्रुतानुभूतं तत्सर्व श्लोकैरूपवर्णयति। ग्रामज्योतिः ग्रन्थे त्रयाणां भारतीयग्रामस्त्रीरत्नानां प्रबुद्धचरितोपवर्णनेन सुप्तराष्ट्रप्रबोधं साम्प्रतिकं प्रख्यापयति।

अनेन अध्ययनेन पण्डिताक्षमारावमहोदयायाः स्वातन्त्र्यान्दोलने साहित्यिकमवदानं परिज्ञायते। स्वातन्त्र्यान्दोलने संस्कृतज्ञाक्षमारावमहोदयायाः साहित्यिकमवदानमीति विषयः नूनमेव पाठकानां कृते सुखकरं भवेदिति कामये।

**सन्दर्भाः -**


1. पण्डिताक्षमारावः, सम्पादकः राधावल्लभत्रिपाठी, साहित्य अकादमी
2. पण्डिताक्षमारावः, सम्पादकः राधावल्लभत्रिपाठी, साहित्य अकादमी
3. पण्डिताक्षमारावः, सम्पादकः राधावल्लभत्रिपाठी, साहित्य अकादमी
4. पण्डिताक्षमारावः, सम्पादकः राधावल्लभत्रिपाठी, साहित्य अकादमी एवं क्षमारावसाहित्यम्
5. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.138, डॉ. हरिनारायण दीक्षित
6. सत्याग्रहगीता अ.1.3
7. सत्याग्रहगीता अ.1. श्लो. 20-39
8. सत्याग्रहगीता अ.1-18
9. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.140, डॉ. हरिनारायण दीक्षित
10. उत्तरसत्याग्रहगीता अ.1-47
11. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.144, डॉ. हरिनारायण दीक्षित
12. स्वराज्यविजय: - अ.1-54
13. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.142, डॉ. हरिनारायण दीक्षित
14. शङ्करजीवनाख्यायीनम् -उल्लासः 8, श्लो.1-32, उल्लासः 11, श्लो.1-39,
15. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.143, डॉ. हरिनारायण दीक्षित
16. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.144, डॉ. हरिनारायण दीक्षित
17. संस्कृत साहित्य में राष्ट्रिय भावना- पृ.145, डॉ. हरिनारायण दीक्षित
18. कथामुक्तावली-भूमिकाभागः, सम्पादिका प्रो.नन्दापुरी
19. विचित्रपरिषद्यात्रा, सम्पादिका क्षमारावः
20. पण्डिताक्षमारावः, सम्पादकः राधावल्लभत्रिपाठी, साहित्यअकादमी
21. शङ्करजीवनाख्यायीनम् - भूमिकायां, सम्पादिका क्षमारावः
22. कथापञ्चकं -विषयानुक्रमणिकानुसारम्
23. कथामुक्तावली- विषयानुक्रमणिकानुसारम्



*सहायकाचार्यः,*

*संस्कृतसाहित्यविद्याशाखा, केन्द्रीयसंस्कृतविश्वविद्यालयः,*

*लखनऊपरिसरः, लखनऊ*

# श्लेषालङ्कारः - संस्कृतविश्लेषणसाधनानां परीक्षणाय एकः समाह्वयः

डॉ. वरलक्ष्मीः



**प्रबन्धसारः** - संस्कृतसाहित्यस्य अध्ययनाध्यापनन्तु पदच्छेदः, पदविश्लेषणं, समस्तपदविच्छेदः, समस्तपदविश्लेषणम् अन्वयश्चेति सम्प्रदायमनुसृत्य गुरुशिष्यपरम्परया वैदिककालात् प्रचलति। तमेव सम्प्रदायमनुसृत्य प्राचीनशास्त्राणाम् आधुनिकशास्त्राणाञ्च ज्ञानं समालोढ्य, अहरहं परिश्रम्य संस्कृतसङ्गणकीयसंसाधनानि निरमान् इतोऽधिकानि निर्मान्ति च। एभिः विद्वद्भिः निर्मितः संसाधनसमुच्चयः नैकेषु अन्तर्जालपुटेषु हस्तलभ्यः वर्तते। संस्कृतविश्लेषकसंसाधनानि पठनपाठने कथमुपकुर्वन्तीति श्लेषालङ्कारस्य विश्लेषणं सोदाहरणं प्रदर्श्य संङ्गणकसाधनानां सामर्थ्यं वैशिष्ट्यञ्च पत्रेऽस्मिन् निरूप्यते। अष्टौ श्लेषप्रकाराः सभङ्गाभङ्गोभयात्मकश्लेषश्च सयान्त्रिकविश्लेषणाः प्रस्तूयन्ते।

**1.परिचयः -**

अधुनातनाध्ययनक्षेत्रे अध्ययनाध्यापनविधौ नूतनपरम्परा समारब्धा। वैद्युतकग्रन्थाः, वैद्युतकग्रन्थालयाः, वैद्युतकाध्ययनकक्ष्याः , वैद्युतकाध्ययनं, संङ्गणकोपकरणानीति विद्याक्षेत्रे अध्ययनसौलभ्याय उपकल्पिताः। आ बहोः कालात् गुरुशिष्यपरम्परया अविरतं प्रचाल्यमाने संस्कृताध्ययनक्षेत्रेऽपि ईदृशानि उपकरणानि उपकल्पनीयानीति सत्सङ्कल्पेन कर्मकुशलाः, विद्वत्तल्लजाः संस्कृतसङ्गणकसाधनोपकल्पने कार्यरतास्सन्ति। साम्प्रतम् उपलभ्यमानानां साधनानां परिचयः, तेषाम् उपयोगिता, कार्याचरणे उत्पद्यमाना भ्रान्तिः तस्याः निवारणञ्च शोधपत्रेणानेन क्रियते।

**2. संस्कृतसङ्गणकीयसंसाधनानि -**

फ्रान्सदेशस्थायाः इन्ब्रियासंस्थायाः प्राचार्यः जेरार्ड ह्युयेट्, ब्रौन् विश्वविद्यालयीयः आचार्यः पीटर् षार्फ, प्राचार्यः ओलिवर् हेल्विम्, जवाहरलालनेहरूविश्वविद्यालयीयः प्राचार्यः गिरीशनाथझावर्यः, हैदराबादनगरस्थकेन्द्रीयविश्वविद्यालयीया प्राचार्या अम्बाकुलकर्णिवर्या अन्ये च गण्याः संस्कृतसाहित्याध्ययनाय विश्लेषणाय नैकानि संस्कृतसङ्गणकीयसंसाधनानि निरमान्। तानि च संसाधनानि विभिन्नेषु अन्तर्जालपुटेषूपलभ्यन्ते। सन्धिसंश्लेषिका, सन्धिविच्छेदिका, पदविश्लेषिका, सुबन्ततिङ्न्तकृदन्ततद्धितरूपाणां उत्पादिकाः, संस्कृत हिन्दी अनुवादकम् अनुसारकं लिप्यन्तरीकरणश्चेति नैकानि संसाधनानि दैनन्दिकोपयोगे समानयन्। (अन्तर्जालपुटसङ्केताः)

**2.1 संसाधनोपयोगे जायमानाः क्लेशाः** - संस्कृतवाङ्मयस्य विश्लेषणावसरे मानवः स्वीयं पुस्तकज्ञानं प्रापञ्चिकपरिज्ञानञ्च उपयुङ्क्ते। विषयान् इदमित्थतया स्पष्टयति। सङ्गणकयन्त्रं केवलदत्तनिधिसङ्ग्रहाधारेण वाङ्मयं विश्लेषयति। तानि विश्लेषणानि भ्रान्तिजनकानीव प्रतिभान्ति। तं विषयमत्र प्रस्तुमः।

**2.1.1 यान्त्रिकसन्धिविच्छेदनम् -** जेरार्ड ह्युयेट् महोदयेन **'सेग्मेण्टर्'**, गिरीशनाथवर्येण **'सन्धि एनलैजर्'**, अम्बाकुलकर्णीमहाभागया **'सन्धिविच्छेदिका'**, चेति सन्धिविच्छेदनसाधनानि निर्मितानि। इमानि यान्त्रिकसाधनानि 'तवातिमहानलाभः' 'महेशः' इत्युदाहरणानि कतिधा छिन्दन्तीति तालिकायां प्रस्तूयन्ते।

| क्र.सं | उदाहरणम् | सेग्मेण्टर् | सन्धि एनलैजर् | सन्धिविच्छेदिका |
|---|---|---|---|---|
| 1 | तवातिमहानलाभः | 41 | 0 | 62 |
| 2 | महेशः | 1 | 2 | 8 |

तालिका-1 सन्धिविच्छेदनानां संख्यात्मकविश्लेषणम्

**2.1.2 यान्त्रिकपदविश्लेषणम् -** जेरार्ड ह्युयेट् महोदयेन **'स्टेम्मर्'**, गिरीशनाथवर्येण **'सुबन्त एनलैजर्'**, **'तिङ्गन्त एनलैजर्'** च अम्बाकुलकर्णीमहाभागया **'पदविश्लेषिका'**, पीटर् षार्फवर्येण **'मार्फलाजिकर् एनलैजर्'** चेति पदविश्लेषणसाधनानि निर्मितानि। यान्त्रिकसाधनानि सुबन्तानि तिङ्गन्तानि च बहुलतया विश्लेषयन्ति। यथा

| क्र.सं | संसाधनानि | उदाहरणम् | यान्त्रिकविश्लेषणानि |
|---|---|---|---|
| 1. | स्टेम्मर्-पदविश्लेषिका-<br>सुबन्त एनलैजर्-<br>मार्फलाजिकल एनलैजर् | वलयः-सुबन्तम् | **वलि-** स्त्री.प्र.वि.ब.व.<br>**वलय-** पुं.प्र.वि.ए.व. |
| 2. | स्टेम्मर्-पदविश्लेषिका-<br>तिङगन्त एनलैजर् | वक्ष्यति-तिङगन्तम् | **वह** कर्तरि, लृट्, प्र, ए.पर.वहँ अदादिः<br>**वच्** कर्तरि लृट् प्र ए पर वचँ भ्वादिः<br>**ब्रू** कर्तरि लृट् प्र ए पर ब्रून् अदादिः |

तालिका-2 सुबन्ततिङन्तयोः यान्त्रिकविश्लेषणम्

2.1.3 यान्त्रिकसमस्तपदविच्छेदनम्

**'सालकाननशोभिनी'**ति समस्तपदं विभिन्नतया विविधसंसाधनानि भञ्जन्ति। साहित्ये तु समस्तपदमिदं स-अलक-आनन-शोभिनी, साल-कानन-शीभिनीति च द्वेधैव विभज्यते।

| | | |
|---|---|---|
| 1. | सेग्मेण्टर् | 18 |
| 2. | समासविच्छेदिका | 52 |

तालिका - 3 समस्तपदविच्छेदनस्य संख्यात्मकविश्लेषणम्

**2.1.4 समस्तपदविश्लेषणम् -** 'विपल्लवाः' इति समस्तपदविश्लेषणं यन्त्रेण बहुधा क्रियते। विपद्-लवाः -षष्ठीतत्पुरुषसमासः, वि-पल्लवाः - प्रादितत्पुरुषसमासश्चेति द्विविधसमासौ प्रयुक्तौ। यान्त्रिकपदविश्लेषणानि 31 प्राप्यन्ते।

समेषां संस्कृतसङ्गणकसंसाधनानां संख्याबाहुल्योपेतविश्लेषणानि संल्लक्ष्य उपयोक्ता अवश्यं भ्रान्तिमनुभवति। कथं बहूनि विश्लेषणानि यन्त्रं जनयति? कतमं विश्लेषणं अर्थवदस्ति? निरर्थकानि विश्लेषणानि कुतो यन्त्रं जनयति?

**3. दत्तनिधिसङ्ग्रहः -**

प्रातिपदिककोशः, अव्ययकोशः, संख्यासंख्येयपूरणकोशः सर्वनामकोशः, क्रियापदकोशः, कृदन्तपदकोशश्च दत्तनिधिसङ्ग्रहरूपेण यन्त्रे निवेशिताः। तस्याधारेणैव सन्धिविच्छेदनं, पदविश्लेषणं, यान्त्रिकानुवादश्चेति संक्लिष्टकार्याणि सङ्गणकयन्त्रेण सिद्ध्यन्ति। जैकमपि विच्छेदनं, विश्लेषणञ्च निरर्थकमस्तीति निश्चप्रचं वक्तुं शक्यते।

संस्कृतभाषा सहजतयैव वैशिष्ट्यपूर्णास्ति। एकमेव पदं बहुधा छेत्तुं शक्यते। अथवा एकमेव पदं बहून् अर्थान् व्यनक्ति। अत एव एकस्यैव ग्रन्थस्य वा काव्यस्य वा शास्त्रस्य वा नैकानि व्याख्यानानि अथवा भाष्याणि क्रियन्ते। ईदृशं संस्कृतभाषागतवैशिष्ट्यं मनसि निधाय कविपण्डिताः श्लेषालङ्कारकाव्यानि रचयित्वा चमत्कारं जनयन्ति।

**4. अलङ्कारः -**

श्लेषालङ्कारस्य विश्लेषणात्पूर्वं काव्यं नाम किम्? काव्ये अलङ्कारस्य स्थानं कीदृशम् अस्ति? को वा अलङ्कारः? स च कतिधा वर्तत? इति सङ्क्षिप्ततया ज्ञातव्यम्।

अ. **'शब्दार्थौ सहितौ काव्यमि'**ति काव्यालङ्कारकर्ता भामहः काव्यस्य लक्षणं वक्ति।

आ. काव्यालङ्कारसूत्रवृत्तिकारः वामनः **'काव्यं ग्राह्यमलङ्कारादि'**ति काव्ये अलङ्कारप्राधान्यं, **'सौन्दर्यमलङ्कारः'** इति अलङ्कारस्वरूपञ्च विवृणोति।

इ. **'काव्यशोभाकरान् धर्मानलङ्करान् प्रचक्षते'** इति काव्यादर्शकारः दण्डी अलङ्कारप्राशस्त्यं स्तौति। स च अलङ्कारः शब्दालङ्कारः अर्थालङ्कारश्चेति वेधा वर्तते। अलङ्कारेषु अन्यतमः श्लेषः।

**4.1 श्लेषालङ्कारः -** श्लेषालङ्कारविषये त्रयः आलङ्कारिकाः तुल्याभिप्रायं वहन्ति। श्लेषः अष्टधेति साहित्यदर्पणकारः विश्वनाथः[1], काव्यप्रकाशकर्ता मम्मटश्च अभिप्रेतः[2]। शृङ्गारप्रकाशकर्ता भोजराजस्तु षोढा इति अभिप्रैति।[3]

| क्र.सं | साहित्यदर्पणम् | काव्यप्रकाशः | शृङ्गारप्रकाशः |
|---|---|---|---|
| 1. | वर्णश्लेषः | वर्णश्लेषः | |
| 2. | प्रत्ययश्लेषः | प्रत्ययश्लेषः | प्रत्ययश्लेषः |
| 3. | लिङ्गश्लेषः | लिङ्गश्लेषः | - |
| 4. | प्रकृतिश्लेषः | प्रकृतिश्लेषः | प्रकृतिश्लेषः |
| 5. | पदश्लेषः | पदश्लेषः | पदश्लेषः |
| 6. | विभक्तिश्लेषः | विभक्तिश्लेषः | विभक्तिश्लेषः |
| 7. | वचनश्लेषः | वचनश्लेषः | वचनश्लेषः |
| 8. | भाषाश्लेषः | भाषाश्लेषः | भाषाश्लेषः |

तालिका - 4 श्लेषालङ्कारप्रकाराः

श्लेषालङ्कारः पुनः शब्दश्लेषः अर्थश्लेषश्चेति द्विधा विभक्तोऽस्ति। शब्दश्लेषः सभङ्गाभङ्गोभयात्मकश्चेति त्रेधा विभक्तः। उपरितनाष्टौ प्रकाराः शब्दश्लेषस्य त्रिषु विभागेषु अन्तर्भवन्तीति मम्मटः विश्वनाथश्च अभिप्रेतः।



सभङ्गः-वर्ण-प्रत्यय-लिङ्ग-प्रकृति-पद-विभक्ति-वचन-भाषा-प्रभेदाः

अभङ्गः-वर्ण-प्रत्यय-लिङ्ग-प्रकृति-पद-विभक्ति-वचन-भाषा-प्रभेदाः

उभयात्मकम् -वर्ण-प्रत्यय-लिङ्ग-प्रकृति-पद-विभक्ति-वचन-भाषाप्रभेदाः

**5. श्लेषालङ्कारोदाहरणानि-यान्त्रिकविश्लेषणम्**

व्युत्पन्नमतयः कविवरेण्याः सभङ्गाभङ्गोभयात्मकश्लेषस्य अष्टौ प्रकारान् सन्धेः अथवा समासस्य विभिन्नविच्छेदनानाम्, पदानां नैकविश्लेषणानाञ्चाधारेणैव काव्येषु प्रयुञ्जते। श्लेषालङ्कारवैचित्रिं यान्त्रकसंसाधनानाम् अनुपममद्भुतञ्च सामर्थ्यं सोदाहरणं विवृणुमः। साहित्यदर्पणं, काव्यप्रकाशः, शृङ्गारप्रकाशः चेति त्रिभ्यः साहित्यशास्त्रग्रन्थेभ्यः, नैषधीयचरितं नलचम्पूश्चेति द्वाभ्यां काव्याभ्याञ्च उदाहरणश्लोकाः उद्धृताः।

**5.1 वर्णश्लेषः –** प्रतिकूलतामुपगते हि **विधौ** विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः **करसहस्रमपि** ॥[4]

बहुषु साधनेषु सत्सु अपि (अ)विधौ प्रतिकूले सति (आ)विधौ अथवा चन्द्रे उदिते सति (अ)सहस्रं हस्ता अपि (आ)सहस्रं किरणा अपि (अ)कार्त्यवीर्यार्जुनं (आ)सूर्यं रक्षितुं न प्रभवन्ति।

विधौ चन्द्रे विधातरि वा, कराः किरणाः हस्ताश्च। श्लोके वर्णश्लेषं प्रयुज्य विधौ इति पदेन चन्द्रं विधातारञ्च, करसहस्रमिति पदेन हस्ताः किरणाश्चेति वन्वार्थ साधयित्वा कार्त्यवीर्यार्जुनं सूर्यञ्चावर्णयत् कविः।

श्लेषप्रकारः - वर्णश्लेषः

उदाहरणम् - विधौ

1. उकारान्तः पुं.लि. विधु शब्दः स.वि.ए.व

2. इकारान्तः पुं.लि. विधि शब्दः स.वि.ए.व.

'विधि' शब्दस्य 'विधु' शब्दस्य च सप्तमीविभक्तेः उभे रूपे तुल्ये स्तः।

तालिका - 5 वर्णश्लेषस्य यन्त्रिकपदविश्लेषणम्

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो
**विधौ वक्रे** मूर्ध्नि स्थितवति वयं के पुनरमी॥[5]

शिवस्य अलङ्कारः मानवकपालं, तस्य सेवकः शिथिलाङ्गः भृङ्गी, तस्य सम्पत्तिः वृद्धवृषभः, तस्य शिरसि (अ)चन्द्रकला (आ) प्रतिकूलविधिः। विधातरि प्रतिकूले सति देवगुरोः एव ईदृशी स्थितिः अस्ति चेत् मनुष्याणाम् अस्माकं का वा स्थितिः भवेत्? श्लोकेऽस्मिन्नपि विधौ इति विधुशब्दस्य विधिशब्दस्य च तुल्यं सप्तम्यन्तरूपं द्वन्द्वार्थे प्रयुज्य चमत्करोति कविः।

**5.2 प्रत्ययश्लेषः**

रजनिरमणमौलेः पादपद्मावलोक
क्षणसमयपराप्तापूर्वसंपत्सहस्रम्।

प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादाद्
अहमचितरुचिः **स्यान्नन्दिता** सा तथा मे ॥[6]

शिवस्य पादपद्मावलोकनात् सहस्रधा सम्पत्तिं प्राप्य, तत्प्रसादेन भक्तिश्च सम्प्राप्य अहं (अ)प्रथमगणमध्ये नन्दकः स्याम् (आ) नन्दिता नाम गणभावः स्यात्। 'नन्दिता' इत्येकमेव पदं, 'तृच', 'तल्' इति द्वौ प्रत्ययौ प्रयुक्तौ, द्वावर्थौ च साधितौ। स्यान्नन्दितेति स्यां स्यादित्युत्तमप्रथमयोः नन्दितेति तृच्तलोस्तुल्यं रूपम्। पदविश्लेषिकेति सङ्गणकसाधनेन प्रस्तुतं यान्त्रिकविश्लेषणं परिशील्यते।

नन्दिता **तृच्** प्रत्ययः
नन्दिता क्त प्रत्ययः
नन्दिता नन्दि **(तल्)**
नन्द (लिङ्गम् स्त्री कृत् प्रत्ययः क्त टुनदिँ भ्वादिः)
नन्दिता (स्त्री प्र.वि. एक)
नन्दितृ (पुं) (प्र.एक)
नन्द् (कर्तरि लुट् प्र एक परस्मैपदी टुनदिँ भ्वादिः)
नन्द् (भावे लुट् प्र एक आत्मनेपदी टुनदिँ भ्वादिः)

तालिका - 6 प्रत्ययश्लेषस्य यान्त्रिकविश्लेषणम्

**किरणा** हरिणाङ्कस्य दक्षिणश्च **समीरणः**।
कान्तोत्सङ्गजुषां नूनं **सर्व** एव **सुधाकिरः** ॥[7]

(अ) सर्वे चन्द्रकिरणाः (आ) सर्वः दक्षिणदिशायाः वायुः प्रियान् उपगच्छन्तीभ्यः योषिद्भ्यः (अ)अमृतस्यन्दिनः (आ) अमृतस्यन्दी एव (भवन्ति भवति वा)।

- बहुवचनार्थे - सर्वे किरणाः
- एकवचनार्थे - सर्वः वायुः
- **सर्वे** एव - सर्व एव **'एचोऽयवायवः'**[8] **'लोपः शाकल्यस्य'**[9] इति सूत्रद्वयाधारण 'ए' कारलोपः अभवत्।
- सर्वः एव - सर्व एव **'भोभगोअघोअपूर्वस्य योऽशि'**[10] **'लोपः शाकल्यस्य'** सूत्रद्वयाधारेण विसर्गलोपः अभवत्।
- अनेन वचनश्लेषः प्रयुक्तः।
- समीरणः - सुधाकिरः - एकवचनान्तस्य तु **'क'** प्रत्ययः
- किरणाः - सुधाकिरः - बहुवचनान्तस्य विशेषणत्वे विक्षेपार्थात् कृधातोः **'क्विप्'** प्रत्ययः। उदाहरणेऽस्मिन् प्रत्ययश्लेषः प्रयुक्तः।

किरः - **किर्** - नपुं 5 एक
किर् - नपुं 6 एक
**किर** - पुं 1एक

तालिका - 7 प्रत्ययश्लेषस्य यान्त्रिकविश्लेषणम्

तस्या विनापि हारेण निसर्गादेव **हारिणौ।**

जनयामासतुः कस्य विस्मयं न पयोधरौ॥[11]

हार शब्देन मतुबर्थे **'इन्'** प्रत्ययः प्रयुक्तः। हारः अनयोः अस्तीति हारिणौ। हारयुक्तौ पयोधरौ इत्यर्थः। **हृ 'णिनि'** प्रत्ययः ताच्छील्यार्थे प्रयुक्तः। मनोहारिणौ पयोधरौ इत्यर्थे प्रयुक्तः। हारेण विनापि सहजतयैव (अ)मनोहारिणौ तस्याः पयोधरौ विस्मयं जनयतः। हारेण विनापि सहजतयैव (अ)हारयुक्तौ तस्याः पयोधरौ विस्मयं जनयतः।

हारिणौ - हारिन् पुं 1 द्वि

हारिन् पुं 2 द्वि

हारिन् पुं सं प्र 8 द्वि

हारिण पुं 1 द्वि

हारिण पं 2 द्वि

हारिण पुं सं प्र8 द्वि

तालिका - 8 प्रत्ययश्लेषस्य यान्त्रिकविश्लेषणम्

**5.3 लिङ्गवचनश्लेषः**

**भक्तिप्रवविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी**

ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये

लावण्यस्य **महानिधी** रसिकतां लक्ष्मीदृशो**स्तन्वती**

युष्माकं **कुरुतां** भवार्तिशमनं **नेत्रे तनुर्वा** हरेः॥[12]

- विष्णोः नेत्रे तनुश्च संसारदुःखं शमयतः इति कविः माङ्गलिकं श्लोकं ग्रथयति।
- नेत्रस्य तनोश्च समानविशेषणानि प्रयुक्तानि।
- लिङ्गवचनश्लेषेण कविः चमत्कारं जनयति।

| | |
|---|---|
| सङ्गणकीयसाधनं श्लेषमेनं सुस्पष्टं विशदयति। स्त्रियाम् एकवचनार्थे | नपुंसके द्विवचनार्थे |
| भक्तिप्रबविलोकनप्रणयिनी | भक्तिप्रबविलोकनप्रणयिनी |
| नीलोत्पलस्पर्धिनी | नीलोत्पलस्पर्धिनी |
| महानिधी | महानिधी |
| तन्वती | तन्वती |
| तनुः | नेत्रे |
| कुरुताम् | कुरुताम् |
| कृ-3 कर्तरि लोट् प्र.एक. आत्मनेपदी डुकृञ् तनादि | कृ-3 कर्तरि लोट् प्र.वि. परस्मैपदी डुकृञ् तनादि |

तालिका - 9 लिङ्गवचनश्लेषस्य यान्त्रिकविश्लेषणम्

विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।
तव दत्तां सदामोदं **लसत्तरलहारिणी** ॥[13]

सुन्दर्याः नेत्रे स्तने च आमोदं ददत इति वचनलिङ्गश्लेषेण एकैनैव विशेषणेन तिङन्तेन च विशेष्यद्वयं वर्ण्यते।

| **विशेषणम्** | **विशेष्यम्** | **कर्म** | **क्रियापदम्** |
|---|---|---|---|
| **लसत्तरलहारिणी** | लसन् तरलः यस्य | आमोदं | दत्ताम्। |
| **इन्** प्रत्ययः मत्प् | तादृशहारवती | | दा कर्तरि लोट् प्र वि **एक** |
| स्त्री.प्र.वि.ए.व | **स्तनद्वयी** | | **आत्मनेपदी** डुदाञ् जुहोत्यादिः |
| **लसत्तरलहारिणी** | लसन्ती ते तरले | आमोदं | दत्ताम्। |
| **णिनि** प्रत्ययः | तादृशी च ते | | दा कर्तरि लोट् प्र द्वि |
| ताच्छील्यार्थे | हारिणी मनोहारिणी नेत्रे | | **परस्मैपदी** डुदाञ् जुहोत्यादिः |
| न.पुं.प्र.वि.वि.व | **विकसन्नेत्रनीलाब्जे** | | |

तालिका - 10 लिङ्गवचनश्लेषस्य यान्त्रिकविश्लेषणम्

**तनुत्वरमणीयस्य मध्यस्य च भुजस्य च।**
**अभवन्नितरां तस्या वलयः कान्तिवृद्धये** ॥[14]

सुन्दर्याः कटेः (अ) वलित्रयं, भुजस्य (आ) कङ्कणं च कान्तिवृद्धये(अ) अभवन्+ नितराम् (आ)अभवत्+ नितराम् इति वचनलिङ्गश्लेषः प्रयुक्तः। यान्त्रिकपदविश्लेषिका पदविच्छेदिका च समर्थतया श्लेषमिमं वर्णयति।

| | | |
|---|---|---|
| मध्यस्य | वलयः | **अभवन्+ नितराम्** |
| | **वलि** स्त्री.प्र.ब.व | भू कर्तरि लङ्ग प्र.प. ब.व परस्मैपदी भ्वादिः |
| भुजस्य | वलयः | **अभवत्+नितराम्** |
| | **वलय** पुं.प्र.ए.व | भू कर्तरि लङ् प्र.प. ए.व परस्मैपदी भ्वादिः |

तालिका - 11 लिङ्गवचनश्लेषस्य यान्त्रिकविश्लेषणम्

**5.4 प्रकृतिश्लेषः -** अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च **वक्ष्यति।**
**सामर्थ्यकृद**मित्राणां मित्राणां च नृपात्मजः ॥[15]

राजपुत्रः शास्त्राणि हृदये (अ) वहति ज्ञेषु (आ) ब्रवीति च। मित्रेभ्यः (अ) सामर्थ्यप्रदः शत्रुभ्यः (आ) सामर्थ्यहर्ता च अस्ति। वह वच् प्रकृतिद्वयमस्ति। वक्ष्यति इति लुट्लकाररूपमेकमेवास्ति। तद्वत् सामर्थ्यकृत्।

| | | | |
|---|---|---|---|
| राजपुत्रः | शास्त्राणि | हृदि | वक्ष्यति वह कर्तरि, लुट्, प्र, ए.पर.वहँ अदादिः |
| | | ज्ञेषु | वक्ष्यति वच् कर्तरि लुट् प्र ए पर वचँ भ्वादिः |
| | | | बू कर्तरि लृट् प्र ए पर ब्रून् अदादिः |
| | | | **हृदोऽधिकरणत्वे वहिधातुर्ज्ञानार्थवाची।** |

तालिका - 12 प्रकृतिश्लेषस्य यान्त्रिकपदविश्लेषणम्

| | | |
|---|---|---|
| राजपुत्रः | मित्राणां | सामर्थ्यकृत् - मित्रसम्बन्धित्वे करणार्थः। **डुकृञ्** तनादिः करणे |
| | अमित्राणां | सामर्थ्यकृत् - अमित्रसम्बन्धित्वे छेदनार्थः कृन्तति इति धातोः। **कृ कृञ्** स्वादिः हिंसायाम् |

तालिका - 13 प्रकृतिश्लेषस्य यान्त्रिकपदविश्लेषणम्

### 5.5 पदश्लेषः

**पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।**
**विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥**[16]

देव! आवयोः गृहे तुल्ये स्तः।

- पृथुकार्तस्वरपात्रं (अ) त्वद्गेहं बृहत्स्वर्णपात्रंपूर्णं (आ) मद्गेहं बालार्तनादप्रपूर्णम्
- भूषितनिःशेषपरिजनं (अ) तव परिजनः भूषितालङ्कारः (आ) मदीयाः पृथ्व्यां शयानाः
- विलसत्करेणुगहनं (अ) मत्तगजविलसितं (आ) मूषिकधूलिसंसिक्तम्
- पदश्लेषप्रयोगेण अकिञ्चनस्य राज्ञश्च सम्पत्तिः वर्णिता।

### 5.6 विभक्तिश्लेषः

**सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।**
**नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥**[17]

विभक्तिश्लेषेण एकेनैव श्लोकेन पुत्राय चोरस्य उपदेशः शिवाय भक्तस्य निवेदनञ्चोपवर्णितम्।

भक्तः - हर! त्वं सर्वस्य सर्वस्वम्।
चोरः - (पुत्र) त्वं सर्वस्य सर्वस्वं हर।
भक्तः - त्वं भवच्छेदतत्परः।
चोरः - त्वं च्छेदतत्परः भव।
भक्तः - नयोपकारसांमुख्यम् तनुवर्तनम् आयासि।
चोरः - उपकारसांमुख्यं नय। तनवर्तनम् आयासि।
हर- पुं संबोधन एक
हर- हृ-कर्तरि लोट् मध्यम एक परस्मैपदी हञ् भ्वादिः
भव पुं संबोधन एक; संसार इति अर्थोऽपि अस्ति।
भव भू कर्तरि लोट् मध्यम एक परस्मैपदी भू भ्वादिः
आयासि - आयासिन् नपुं प्रथमा एक
आयासि - आङ् या कर्तरि लट् मध्यम एक परस्मैपदी या अदादिः

तालिका -14 विभक्तिश्लेषस्य यान्त्रिकविश्लेषणम्

**5.7 वचनश्लेषः -** लिङ्गश्लेषस्योदाहरणेष्वेव वचनश्लेषः प्रस्तुतः।

**5.8 भाषाश्लेषः -** महदे सुरसंधम्मे तमव समासंगमागमाहरणे।
हर वहुसरणं तं चित्तमोहमवसर उमे सहसा ॥[18]

संस्कृतप्राकृतभाषाभ्यां पार्वती स्तौति कविः। संसाधनैः संस्कृतभाषागतपदविश्लेषणं कर्तुं शक्यते। प्राकृतभाषायाः विश्लेषणाय साधनानि अस्मत्समीपे नोपलभ्यन्ते।

6. सभङ्गाभङ्गोभयात्मकश्लेषः - **पुनस्त्रिधा सभङ्गोथाभङ्गस्तदुभयात्मकः ।**[19]

यदि पदभङ्गं कृत्वा पूर्वोल्लिखिताः अष्टविधश्लेषाः प्रयुज्यन्ते तर्हि ते सभङ्गश्लेषप्रकारा इति उच्यन्ते।

- पदभङ्गं विनैव ते प्रयुज्यन्ते चेत् अभङ्गश्लेषप्रकारा इति व्यवह्रियन्ते।
- एकस्मिन्नेव श्लोके उभयमपि प्रयुज्य अष्टौ श्लेषाः प्रयुज्यन्ते चेत् उभयात्मकश्लेषा इति कथ्यन्ते।

**6.1 सभङ्गश्लेषः - बालेवोद्यानमालेयं सालकाननशोभिनी**[20]

इयम् उद्यानमाला (अ) **स-अलक-आनन-शोभिनी** बाला इव अस्ति।

- इयम् (आ) साल-कानन-शोभिनी उद्यानमाला बाला इव अस्ति।
- सभङ्गश्लेषं प्रयुज्य एकेनैव विशेषणेन विशेष्यद्वयं वर्णयति।
- यान्त्रिकसमस्तपदच्छेदनेन अस्य समस्तपदस्य चत्वारिंशत्यधिकविच्छेदानि प्राप्यन्ते।
- सर्वाण्यपि विच्छेदनानि अर्थयुक्तानीति अवधातव्यम्।
- सन्दर्भमनुसृत्य कानिचन विच्छेदनानि ग्राह्याणि भवन्ति। अन्यानि च तत्सन्दर्भ अग्राह्याणि भवन्ति।

**6.2 अभङ्गश्लेषः -**

**योसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।**
**शतकोटिदतां बिभविबुधेन्द्रः स राजते ॥**[21]

विबुधेन्द्रः इत्यनेन देवानां राजा इन्द्रः विदुषां श्रेष्ठः राजा च ग्राह्यौ।

- विशेषणानि सर्वाण्यपि इन्द्रे राज्ञि च पदभषे विनैव अनुयन्ति।

**6.3 उभयात्मकश्लेषः**

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोवृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामरः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥[22]

माधवः उमाधवः विष्णुः शिवश्च स्तुतः।सभाश्लेषेण विष्णुः अभङ्गश्लेषेण शिवश्च वयेते।

**6.3.1 विष्णुपक्षे सभङ्गश्लेषः**

- **ध्वस्तमनोभवेन-** ध्वस्तं अनः शकटं वा अभवेन अजेन वा
- **बलिजित् -** बलिनो दानवान् यो जयति तादृग्येन कायः वपुः
- **पुरा स्त्रीकृतः**
- **उद्वृत्तभुजङ्गहा -** यश्चोवृत्तं समदं कालिकाख्यं भुजङ्गं हतवान्

- **रवलयो** - रवे शब्दे लयो यस्य

- **गङ्गां च योऽधारयत्** - गां गोवर्धनपर्वतं

- **शशिमच्छिरोहर** - शशिमथ् - राहुः -तस्य शिरोहरः

- **स्वयमन्धकक्षयकरस्त्वां** - स्वयम् अन्धक-क्षय-करः - त्वाम् अन्धकनाम्नां जनानां येन क्षयो निवासो द्वारकायां कृतः

- सर्वदः माधवः पायात्।

**6.3.2 शिवपक्षे अभङ्गश्लेषः**

ध्वस्तमनोभवेन - ध्वस्तः मनोभवः मदनः येन सः

बलिजित्कायः पुरास्त्रीकृतः - बलेः जित् -विष्णुः पुरा - अस्त्रीकृतः

**उवृत्तभुजङ्गहारवलयो** - सर्पाभरणधरः

**यो गङ्गाम् अधारयत्**

**यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामरः** - चन्द्रशेखरः

**स्वयमन्धकक्षयकर**- अन्धकनामकराक्षसस्य हर्ता

**सर्वदा उमा-धवः** - पार्वत्याः पतिः शिवः पायात्।

**6.4 श्रीहर्षस्य नैषधीयचरिते उभयात्मकश्लेषः**

देवःपतिर्विदुषि नैषधराजगत्या न निर्णीयते किमु न वियते किमु भवत्या।

नायं नलः खलु तवातिमहानलाभो योनमुज्झसि वरः कतरः पुनस्ते ॥[23]

दमयन्त्याः स्वयंवरार्थम् इन्द्राग्निवरुणयमाः नैषधराजः नलः अन्ये राजानः विदर्भदेशं सम्प्राप्नुवन्। दमयन्ती नले अनुरक्तेति ज्ञात्वा चत्वारः देवाः नलरूपधारिणः सन्तः स्वयंवरमण्टपे समासीनाः अभवन्। सरस्वती दमयन्त्याः सखी भूत्वा पञ्चनलान् संलक्ष्य सभङ्गश्लेषं प्रयुज्य तान् वर्णयति। नलपक्षे अभङ्गश्लेषं अन्येषां पक्षे सभङ्गश्लेषं प्रयुज्य श्रीहर्षः स्वपाण्डितीप्रकर्ष प्रदर्शयति।

**6.4.1 नैषधराजगत्या**

1. नलपक्षे =नैषध-राज-गत्या (निषधायां भवः -नैषधीयः-नैषधीयश्च असौ राजा च नैषधराजः-नैषधराजः एव गतिः यस्याः सा-तया)
2. इन्द्रपक्षे= न+ एषः+ धराजगत्याः (पतिः देवः)
3. अग्निपक्षे =न+ एषः +धर+ अज +गत्याः (पति देवः)
4. यमपक्षे = न+ एषः +धरा+ अज +गत्याः (पतिः देवः)
5. वरुणपक्षे= न+ एषः +धराज +गत्याः(पतिः देवः)

सभङ्गश्लेषमनुसृत्य नैके अर्थाः निष्पद्यन्ते।

1. नलपक्षे= नैषधराजगत्या- निषधराज्यस्य राजा नलः

2. इन्द्रपक्षे= न+ एषः+ धराजगत्याः (पृथिव्याः) पतिः किन्तु देवः अथवा एषः+ धराजगत्याः (वज्रायुधस्य अथवा शचीदेव्याः) पतिः देवः

3. अग्निपक्षे =न+ एषः +धर+ अज +गत्याः अजवाहनगतिमान् अग्निः

4. यमपक्षे = न+ एषः +धरा+ अज +गत्याः महिषवाहनगतिमान् यमः
अथवा न+ एषः +धराजगत्याः+ पतिः दक्षिणदिशायाः पतिः यमः

5. **वरुणपक्षे=** न+ एषः +धराज +गत्याः पतिः पृथिव्याः पतिः न अपितु वरुणः अथवा प्राणिनां नाथः

**6.4.2 तवातिमहानलाभः**

1. तव+ अति+ महाः+ नल+आभः - नलकान्तिसदृशः कान्तिः यस्य सः
2. तव +अति +महान् +अलाभः
3. तव +अति +महान् +अ+लाभः - विष्णुसदृशस्य नलस्य लाभः
4. तव +अति +महा +अनल+आभः - अग्निसदृशतेजोवान्
5. तव +अति +महा+ आन+ लाभः - सर्वप्राणिनियन्ता यमः
6. तव+ अति +महान+ लाभः - दीर्घायुप्राप्तिलाभः
7. अयं तव +अतिमहा +अनल +अभः - अग्नितेजोहर्ता वरुणः
8. अयं अति+ महाः+ नलः+ न +तदाभः - नलकान्तिसदृशः कान्तिः यस्य सः अग्निः
9. तव+ अतिम+ हान+ लाभः - ऐश्वरयुक्तानां देवानां त्यागेन सुखप्राप्तिः लाभः

**6.4.3 एनम्**

1 एनम् - सर्वनामविशेषणम्

2. अ +इनं -विष्णोः अग्रजः श्रेष्ठः इन्द्रः

3. अ+ इनं - विष्णुः नाथः यस्य सः वरुणः

**6.4.4 कतरः**

कतरः - सर्वनामविशेषणम्

क+ तरः - सम्पत्सु मग्नः

**6.5 अन्वयाः**

सभङ्गाभङ्गोभयात्मकश्लेषेण नैकानि पदविच्छेदनानि सम्प्राप्तानि। तेषामाधारेण नैके अन्वया अपि प्राप्यन्ते। तद्यथा -

1. (नलपक्षे)हे विदुषि नैषध-राज-गत्या(नैषधराजः एव गतिः यस्याः सा तया) भवत्या अयं ना नलः देवः पतिः अस्ति इति न निर्णीयते किमु. न वियते किमु. तव अति-महान् अ-लाभः(न लाभः) भवति. यदि एनम् उज्झसि तर्हि पुनः ते वरः कतरः भवति.

2. (देवपक्षे)हे विदुषि एषः धराज-गत्याः(पृथिव्याः) पतिः न अस्ति. देवः अस्ति इति भवत्या न निर्णीयते

किमु. न व्रियते किमु. अयं नलः न अस्ति खलु. तव अति-महान् अ-लाभः भवति. यदि एनम् उज्झसि तर्हि पुनः ते वरः कतरः भवति।

3. (इन्द्रपक्षे) हे विदुषि एषः धराजगत्याः (वज्रायुधस्य) पतिः देवः अस्ति इति भवत्या न निर्णीयते किमु. न वियते किमु. अयं नलः न अस्ति खलु. नलाभः अस्ति. (नलस्य आभा इव आभा यस्य सः) यदि एनम् (अ+इनं विष्णो अग्रजं) उज्झसि तर्हि पुनः ते वरः कतरः भवति।

4. (अग्निपक्षे) हे विदुषि एषः धराजगत्याः पतिः देवः अस्ति इति भवत्या न निर्णीयते किमु. (धर-अज-गत्याः(धराजः (अग्निः) एव गतिः यस्याः सा - आग्नेयदिशा आग्नेयदिशायाः पतिः) न वियते किम्। अयं नलः न अस्ति. अति महाः(तेजोवान्) अनलः अस्ति. यदि एनम् उज्झसि तर्हि पुनः ते वरः कतरः भवति।

5. (यमपक्षे) हे विदुषि एषः धराजगत्याः पतिः देवः अस्ति इति भवत्या न निर्णीयते किमु. (धरा-अज-गत्या-धरां अजति-महिषः तेन गतिः यस्य सः) न वियते किम्। अयं नलः न अस्ति. तव अति महा-आन-लाभः भवति. अथवा अति महा अनल-आभः अस्ति. यदि एनम् उज्झसि तर्हि पुनः ते वरः कतरः भवति।

6. (वरुणपक्षे) हे विदुषि एषः धराजगत्याः पतिः देवः अस्ति इति भवत्या न निर्णीयते किमु. (धराजस्य गतिः-जलम्-तस्य पतिः-वरुणः)न वियते किम्। अयं नलः न अस्ति। अति-महा-अनल-अभः अस्ति। यदि एनम् उज्झसि तर्हि पुनः ते वरः कतरः भवति।

### 6.6 नलचम्पूकाव्ये सभङ्गश्लेषः

भवन्ति फाल्गुने मासि वृक्षशाखा **विपल्लवाः** ।  
जायन्ते न तु लोकस्य कदापि च **विपल्लवाः** ॥[24]

वि-पल्लवाः विगताः पल्लवाः येषां ते वृक्षाः - प्रादितत्पुरुषसमासः

विपद्-लवाः (लोकस्य विषये) षष्ठीतत्पुरुषसमासः

द्विः प्रयुज्य एकस्मिन्नेव पदे सभङ्गश्लेषेण द्वौ समासौ प्रयुक्तौ द्वार्थौ च निष्पन्नौ।

नास्ति सा नगरी यत्र **न वापी न पयोधरा ।**  
दृश्यते न च यत्र स्त्री **नवापीनपयोधरा ॥**[25]

- न वापी न पयोधरा - सभाश्लेषेण तटाकस्य जलप्रवाहस्य च उल्लेखः

- **नवापीनपयोधरा -** अभाश्लेषेण यौवनवती पीनस्तनवती स्त्री वर्णिता।

यत्र चलतासम्बन्धः कलिकोपक्रमश्च पादपेषु दृश्यते न पुरुषेषु।

लतापक्षे - यत्र **च-लतासम्बन्धः कलिक-उपक्रमश्च** पादपेषु दृश्यते न पुरुषेषु।

पुरुषपक्षे - यत्र **चलता-सम्बन्धः कलि-कोप-क्रमश्च** पादपेषु दृश्यते न पुरुषेषु।

भूमयो बहिरन्तश्च **नानारामोपशोभिताः ।**  
कुर्वन्ति सर्वदा यत्र **विचित्रवयसां** मुदम् ॥[26]

**नानारामोपशोभिताः**

- नाना-**रामा**-उपशोभिताः इत्यस्मिन् पदच्छेदे सुन्दरीणामुल्लेखः।

- नाना-**आराम**-उपशोभिताः इति विभज्य उद्यानानामुल्लेखः च कृतः।

**विचित्रवयसां**

विचित्रवयसां इत्यस्य युवानः इत्यर्थः नाना-रामा-उपशोभिताः इति पदच्छेदे अन्वेति।

- पक्षिणः इत्यर्थः नाना-आराम-उपशोभिताः इति पदच्छेदे अन्वेति। 7. संस्कृतसङ्गणकसाधनानां सामर्थ्यं वैशिष्ट्यञ्च।

- अम्बाकुलकर्णीवर्यया निर्मिता सन्धिविच्छेदिका **'सालकाननशोभिनीं'** नवत्यधिकशतधा, **'नैषधराजगत्या'** इति पदं चतुष्षष्ट्यधिकत्रिशतधा, **'सर्वदोमाधवः'** इति पदं सप्तविंशत्यधिकद्विशतधा छिनत्ति। कस्यचित् पदस्य विश्लेषणं दशधापि भवितुमर्हति।

- जेराई युयेट वर्येण निर्मितं सङ्गणकसाधनन्तु सीमिततया विच्छेदयति विश्लेषयति तदनु कोशगतार्थान् च प्रदर्शयति।

- गिरीशनाथझावर्यस्य सङ्गणकसाधनसमुच्चयन्तु सरलतया उपयोक्तुं भ्रान्तिरहिततया विश्लेषयितुं शक्यते।

- पीटर् षार्फ् महाभागेन निर्मितानि साधनानि कल्पितः नानाकोशसंग्रहश्च बहुलार्थसाधकानि सन्ति।

- पत्रे प्रस्तुतानि उदाहरणानि तेषां यन्त्रीयविश्लेषणानि परिशील्य अवगन्तुं शक्यते यत् संस्कृतसङ्गणकसाधनानां सामर्थ्यं वैशिष्ट्यञ्च महद्वर्तते।

- यावन्ति यान्त्रिकपदविच्छेदनानि तावन्ति यान्त्रिकपदविश्लेषणानि प्राप्यन्ते। यावन्ति विश्लेषणानि तावन्ति व्याख्यानान्यपि भवितुमर्हन्ति। **श्रीहर्षस्य नैषधीयचरितकाव्यमेवात्र प्रमाणम्।**

सर्वमिदं यान्त्रिकविश्लेषणं यान्त्रिकविच्छेदनञ्च अर्थयुक्तमिति प्रायोगिकपरिज्ञानेन अवगम्यते। मुद्रितग्रन्थेभ्यः नूतनव्याख्यानानि कल्पयितुं, अमुद्रितमातृकाणाञ्च सम्पादनं निर्वोढुम् अतीव उपयोगीनि भवन्ति संस्कृतसङ्गणकोपकरणानि। संस्कृतवाङ्मयस्य अध्ययनाध्यापने अल्पव्याकरणशं संस्कृतशं बहुधा उपकुर्वन्ति संस्कृतसङ्गणकसाधनानीत्युक्तौ नास्त्यतिशयोक्तिः।

**उपसंहारः** - वर्ण-पद-प्रत्यय-प्रकृति-लिङ्ग-वचन-विभक्ति-भाषेति अष्टसु श्लेषेषु नैकानि पदविश्लेषणानि संलक्षितानि। सभङ्गाभङ्गोभयात्मकश्लेषे विभिन्नानि सन्धिविच्छेदानानि अथवा समस्तपदविच्छेदनानि संलक्ष्यन्ते।नानार्थोपेतपदानि प्रयुक्तानि। तस्मात् एकस्यैव श्लोकस्य नैके अन्वयाः व्याख्यानानि वा दृश्यन्ते।

सर्वमिदं संस्कृतभाषागतनैसर्गिकसौष्ठवात् वैशिष्ट्याच्च सिद्ध्यति। तस्मात् हेतोः त्रिविक्रमभट्टः सभङ्गश्लेषात्मकं गद्यपद्यात्मकं नलचम्पूकाव्यं, श्रीहर्षः नैषधीयचरिते श्लेषचमत्कारोपेतपद्यानि, चिदम्बरकविः पञ्चश्लेषात्मकं गद्यपद्यमयं पञ्चकल्याणचम्पूकाव्यं, तत्सदृशाः नैके कवयः नैकानि श्लेषकाव्यानि च व्यरचयन्। पाण्डित्यप्रपूर्णव्याख्यानानि काव्यानामेतेषां श्लेषार्थम् अथवा व्यङ्ग्यार्थं विवृण्वन्ति। सहृदयहृदयेषु ब्रह्मानन्दसहोदरानन्दं जनयन्ति।

तादृशवैशिष्ट्योपेतसंस्कृतवाङ्मयस्य विश्लेषणाय यानि सङ्गणकसंसाधनानि आधुनिकयुगेऽस्मिन् निर्मितानि

तेषु विशिष्य पदविश्लेषिका, सन्धिविच्छेदिका, अनुवादकम् अनुसारकञ्च नैकानि विश्लेषणानि, नैकान् विच्छेदान्, बहूनान् च प्रदर्शयन्ति। अनेन क्लिष्टसंस्कृतरचनाः सरलतया अवगन्तुं शक्यन्ते। यदा सर्वे संस्कृतज्ञाः संस्कृतसङ्गणकसाधनैः परिचिताः भूत्वा तानि उपयोगे आनयन्ति तदैव संसाधननिर्मातॄणां समेषां विदुषां परिश्रमः साफल्यं भजते।

**सन्दर्भाः -**

1. श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।
वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि।
श्लेषाद् विभक्तिवचनभाषाणामष्टधा च सः।। साहित्यदर्पणः-10-13
2. वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः।
श्लिष्यन्ति शब्दाः श्लेषोसावक्षरादिभिरष्टधा।।
अर्थभेदेन शब्दभेदः इति दर्शने काव्यमार्गे स्वरो न गण्यते इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नवते स श्लेषः। स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा। काव्यप्रकाशः- 9-84 3
3. द्वयोस्तन्त्रेणाभिधानं श्लेषः। स षोढा- प्रकृतिश्लेषः, प्रत्ययश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, पदश्लेषः, भाषाश्लेषः इति। शृङ्गारप्रकाशः-10
4. साहित्यदर्पणम् - 10
5. काव्यप्रकाशः 9-369
6. काव्यप्रकाशः 9- 374
7. साहित्यदर्पणम् - 10
8. पा.सूत्रम् 6.1.78 ओ
9. पा.सूत्रम् 8.3.19
10. पा.सूत्रम् 8.3.17
11. शृङ्गारप्रकाशः-10-140
12. काव्यप्रकाशः 9-37114
13. साहित्यदर्पणम्-10
14. शृङ्गारप्रकशः 16
15. साहित्यदर्पणम् 10
16. काव्यप्रकाशः 9.370
17. साहित्यदर्पणम् 10
18. साहित्यदर्पणम् - 10
19. साहित्यदर्पणम् - 10
20. काव्यप्रकाशः 10
21. काव्यप्रकाशः 10-376
22. साहित्यदर्पणम् - 10
23. नैषधीयचरितम् 13.33

24. नलचम्पूः-1.27

25. नलचम्पूः-1.26

26. नलचम्पूः-1.31

**आकरग्रन्थाः**

1. काव्यप्रकाशः, गङ्गानाथ झा, भारतीयविद्याप्रकाशन, वाराणसी
2. विश्वनाथस्य साहित्यदर्पणम्, भारतीयविद्याप्रकाशन, देहली
3. शृङ्गारप्रकाशः, रेवा प्रसाद द्विवेदी, कालिदाससंस्कृत अकाडमी, वाराणसी
4. काव्यादर्शः, एस. के. बेल्वालकर, द ओरियण्टल बुक् सप्लैङ्ग एजेन्सी, पूना
5. काव्यालङ्कारसूत्राणि, पुल्लेलश्रीरामचन्द्रुडु, उस्मानियाविश्वविद्यालयः, हैदराबाद, 1981,
6. काव्यालङ्कारः पुल्लेलश्रीरामचन्द्रुडु, सुरभारतीसमितिः, हैदराबाद, 1979
7. नैषधीयचरितम्, नारायण रामाचार्य, 1952, निर्णयसागरप्रेस, मुम्बई
8. नैषधीयचरितम्, श्री उडालिसुब्बरामशास्त्री, आन्ध्रसाहित्य अकाडमी, सैफाबाद, हैदराबाद
9. नलचम्पूः, राजेन्द्रप्रसाद कोट्यारी, चौखम्बा सुरभारती प्रकाशन, वाराणसी
10. अनुवादचन्द्रिका, चक्रधरनौटियाल हंस शास्त्री, मोतीलाल बनारसीदास, दिल्ली

*उपनिदेशिका*

*संस्कृत अकाडमी, हैदराबाद*

# श्रीमद्योगगीतायां व्यावहारिकजीवनदर्शनम्

**डॉ. रानीदाधीचः**




**शोधसारांशः –**

श्रीमद्भगवद्गीता इति पदश्रवणमात्रेणैव सर्वे अवगच्छन्ति यत् श्रीकृष्णार्जुनसंवादाधारिता गीता। 'गीता' विषयमधिकृत्य शोधदृष्ट्या चिन्तनं क्रियते चेत् प्राप्यते यत् गीतानाम्ना केवलं श्रीकृष्णार्जुनसंवादाधारिता श्रीमद्भगवद्गीता एव न वर्तते अपितु महाभारतात् प्राप्तायाः भगवद्गीतावदेव विविधेषु पुराणेषु नैकानां गीतानामुपलब्धिर्जायते।

स्कन्धपुराणे गुरुगीता, विष्णुधर्मोत्तरपुराणे हंसशङ्करगीते, वराहपुराणे अगस्त्यगीता, अन्यान्यपुराणेषु गणेशगीता-शक्तिगीता-श्रीरामगीता-पाण्डवगीता-गायत्रीगीता-अष्टावक्रगीता-ईश्वरगीता-प्रभृतिगीताः स्वस्वविषयानुगुणं जनान् सदुपदेशान् वितरन्त्यः जनकल्याणे रताः सन्ति। शताधिकविविधगीतासु एका गीता वर्तते प्रवृत्ताः 'श्रीमद्योगगीता'। श्रीमत्परमहंसब्रह्मानन्दस्वामिविरचिता 'श्रीमद्योगगीता' मनुष्यकर्त्तव्यनिरूपणादारभ्य जीवरक्षा-अहिंसा-दान-जप-तप-ब्रह्मचर्य-सत्य-सगुणैश्वराराधन-जगदुत्पत्तिक्रम-कर्म-शोक-हठयोग-राजयोगप्रभृति जनोपयोगिविषयान् भणति इति प्रासङ्गिकदृष्ट्या शोधपत्रेऽस्मिन् योगगीतायाः चयनम् अध्ययनञ्च प्रस्तूयते। अस्य पत्रस्याध्ययनेन पाठकाः लोकोपकारकं ज्ञानं प्राप्स्यन्ति। वैशिष्ट्यमस्य कर्त्तव्याकर्त्तव्यनिरूपणम्।



**कूट-शब्दा–** सगुणेश्वराराधनम्-निर्गुणेश्वराराधनम्, प्रणयनम्, सुधीः, भूमिपाः, ब्रह्मज्ञानम्, शुश्रुषा, नृषु, विनिवेद्य।


श्रीमत्परमहंसब्रह्मानन्दस्वामिविरचिता श्रीमद्योगगीता श्रीब्रह्मानन्दमोक्षगीतेति अपरनाम्नाऽपि निगद्यते। श्रीमदमोहनलालचौहानसुतेन श्रीकृष्ण 'जुगनु' इति नाम्ना ख्यातेन विदुषा तृतीयसंस्करणत्वेन अस्य पुस्तकस्य मोहनबोधिनीटीकासहितं प्रकाशनं कृतम् । श्रीकृष्णेन स्वस्य पुस्तकस्य प्रास्ताविके स्वीकृतं यदस्य ग्रन्थस्य मूल-नाम 'ब्रह्मानन्दमोक्षगीता' एवासीत् किन्तु गुरोः पितुश्च प्रभावात् अध्यापनात् योगगीतेति निगदितम्। अस्य सप्तशत्याः अष्टादशाध्यायेषु जीवनोपयोगिविषयाणां विवेचनं प्राप्यते यन्नाम्नैव ज्ञातुं शक्यते। तद्यथा-मनुष्यकर्त्तव्यनिरूपणम्-जीवरक्षाधर्मः-अहिंसाधर्मः दानधर्मः-जपविधानम्-तपोविधानम्-ब्रह्मचर्यविधानम्-सत्यधर्मः-सगुणेश्वराराधनप्रकारः निर्गुणेश्वराराधनविधानम्-जगदुत्पत्तिक्रमः-कर्मप्रकारः-शोकप्रहारः-हठयोगः-राजयोगसाधनम् सांख्यज्ञानम्-वेदान्तसिद्धान्तनिरूपणम्-सगुणनिर्गुणमुक्तिश्चान्यान्यविषयनिरूपणम् इति।

श्रीमद्भगवद्गीता श्रीकृष्णार्जुनसंवादाधारिता वर्तत इति सुविदितमेव। महाभारतात् प्राप्तायाः भगवद्गीतावदेव विविधेषु पुराणेषु नैकानां गीतानामुपलब्धिर्दृश्यते। स्कन्धपुराणे गुरुगीता, विष्णुधर्मोत्तरपुराणे हंसगीता शङ्करगीता, वराहपुराणे अगस्त्यगीता, अन्यान्यपुराणेषु गणेशगीता, शक्तिगीता श्रीरामगीता, पाण्डवगीता, गायत्रीगीता, ईश्वरगीतेत्यादिनामभिः गीताप्रणयनस्य परम्परां द्रष्टुं शक्यते। गेया भवतीति गीता प्रसिद्धा। गीतायाः महिमानं भणति श्लोकोऽयं-

**गीताशास्त्रं सुविज्ञेयं किमन्यैः शास्त्रसञ्चयैः।**
**सर्वेषामेव शास्त्राणामेका गीतापरायणम्।।**

श्रीब्रह्मानन्दमोक्षगीतायाः प्रणयनस्य कारणं किमिति पूर्वं ज्ञातव्यम्। राजस्थानस्य अजयमेरूनगरे पुष्करतीर्थस्थश्रीपरमहंसस्वामीश्री ब्रह्मानन्दस्वामिना टीकमगढराज्ञ: जिज्ञासाशमनार्थं प्रश्नोत्तरात्मकस्य अस्य ग्रन्थस्य प्रणयनं कृतम्।

मनुष्यकर्त्तव्यनिरूपणाख्ये प्रथमेऽध्याये ग्रन्थस्य निर्विघ्नसमाप्त्यर्थं परमेश्वरं गुरुदेवञ्च प्रणम्य[1] ग्रन्थकारः रूपनगरं[2] तस्य प्राकृतिकसौन्दर्यं[3] सामाजिकं सौष्ठवं[4] राज्ञः गुणान्[5] पुष्करतीर्थवर्णनं ब्रह्मानन्दाश्रमवर्णनं[6] कृत्वा आश्रमे आगतस्य राज्ञःप्रतापसिंहस्य प्रश्नस्योल्लेखं कुर्वन्नाह -

**किं कर्त्तव्यं मनुष्येण प्राप्य जन्म महीतले।**
**एतन्मे ब्रूहि योगीन्द्र प्रथमं बोधहेतवः ।।**[7]

भो योगीन्द्र! महीतलेऽस्मिन् मनुष्येण केषां कर्त्तव्याणां निर्वहणं करणीयं भवति? ब्रह्मानन्दः उत्तरति- राजन्! इहलोके मनुष्याणां कृते सहस्राधिककर्तव्यानां व्यवस्था वर्णिताऽस्ति। तेषु तेषु कर्त्तव्येषु सारभूतस्य इहामुष्मिकलोकेषु हितावहस्य निर्दुष्टस्य कर्त्तव्यस्याचरणं करणीयम्।[8]

कानि च तानि करणीयानीति व्याख्यां कुर्वन्नाह बाल्यावस्थोचितकर्त्तव्यविधानम् बाल्यकाले सुकुमारमतयः सुसंस्कृताः भूत्वा शुद्ध्या विद्याभ्यासं कुर्युः। व्यावहारिकं (लौकिकं) शास्त्रीयञ्च (सैद्धान्तिकम्) ज्ञानमाप्नुयुः।

**बाल्ये वयसि विद्यायाः कुर्यादभ्यासमादरात्।**
**लौकिकं वैदिकं चापि ज्ञानमासादयेत्सुधीः ।।**[9]

कायेन द्रव्येण च यत्नपूर्वकं गुरोः सेवां साधयेत् स्थिरचित्तः भूयात्। आत्मज्ञानं विद्यां च सश्रद्धमवाप्नुयात्।

**गुरूमातोष्य यत्नेन सेवया द्रविणेन वा।**
**गृहणीयात्सुस्थिरो भूत्वा विद्यामात्महितैषिणीम्।।**

लोकालोकार्थदर्शनाय विद्या एव परमं चक्षुरस्ति। नास्ति तत्सदृशं हितकारी सुखकारी मित्रमिह जगतीतले[11] एवं विद्यायाः प्रशंसां कृत्वा विदुषां गौरवं भणति।

**दरिद्रमपि विद्वांसं पूजयन्तीह भूमिपाः।**
**विद्याहीना न शोभन्ते सर्वक्लेशसहा नराः ।।**[12]

अर्थात् विद्यायुक्तः प्रबुद्धः जनः दरिद्रः सन्नपि राज्ञैः संपूज्यते सत्क्रियते। एतद्विपरीतं विद्याविहीनः पुरुषः, जगति प्रतिष्ठां नैवाप्नोति। सर्वदा क्लेशान् सहते।

**समावर्तनविधानम्-** सर्वाधिकविद्यायाः अभ्यासं कृत्वा सम्यक्प्रकारेण अधीत्य शिष्यः स्वशक्त्यनुगुणं सामर्थ्यानुसारं दक्षिणां प्रदाय अर्थसिद्ध्यर्थं गृहं प्रत्यागच्छेत्।

**विद्यां परिसमाप्यान्ते गुरवे दीर्घदक्षिणाम्।**
**दत्त्वा प्रतिनिवर्तेत गृहं सर्वार्थसाधनम् ।।**[13]

**गृहस्थाश्रमप्रवेशः -** भौतिकजगतः भोगादि भोक्तुं वंशवृद्धये सन्तानोत्पत्त्यर्थं ऋणत्रयात् मुक्त्यर्थञ्च गृहस्थाश्रमे प्रवेशः स्यात्।

**यौवने सुखभोगार्थं सन्तानार्थं तथैव च ।**
**ऋणत्रयापनुत्त्यर्थं गृहस्थाश्रममावसेत् ।।**[14]

बालकेन षोडशे विंशतौ वा वयसि यथाकालं यथानियमं विवाहः करणीयः। पाणिग्रहणं स्वजनानुमत्यैव करणीयमित्यपि विधानं योगगीतायां दत्तं वर्त्तते। अल्पे वयसि योषित्सङ्गः नःकरणीयः तेन क्षीणबलोऽपि जायेत क्षीणायुरपि जायेत। जनः स्वजात्याचारचेष्टितैः सदृशीं भार्यां विन्देत। जात्यान्यामाङ्गनां क्वचित् सुन्दरीमपि नोद्वहेत्।[15]

**द्रव्योपार्जनम्-** विवाहोपरान्तं कुटुम्बस्य पालनपोषणनिमित्तं सर्वविधप्रकारैः द्रव्यसंग्रहणाय विधिपूर्वकं यतनीयम्।

**कृतदारः कुटुम्बस्य पोषणार्थं समन्ततः ।**
**द्रव्यस्योपार्जने यत्नं कुर्याद्विधिसमन्वितम् ।।**[16]

जीविकोपार्जनविषये विशिष्टरूपेण एतदपि उक्तमस्ति यत्तादृशं जीविकोपार्जनं न स्यात् येन जीवहिंसा भवेत्।अन्यभूतानि दुःखितानि स्युः। लोकनिन्दितव्यवसायेन धनार्जनं न करणीयम्।[17]

**सदाचरणज्ञानम्-** द्रव्यलाभलोभात् न कदापि परधर्मम् अङ्गीकरणीयम्। सन्तुष्टस्सन् पुरुषः देशकालपरिस्थित्यनुगुणं कुटुम्बस्य भरणपोषणं कुर्यात्। पितरौ सदा वन्देत्। गुरुं पूजयेत्। गुरोः सेवां कुर्यात्। वृद्धानां सेवया आशीर्वादं प्राप्नुयात्। नारीणां कर्त्तव्यानि अपि पृथक्तया श्रीब्रह्मानन्देन वर्णितानि सन्ति। नार्यः मनसा, वाचा, कर्मणा स्वपत्युः शुश्रुषां कुर्युः। गृहकार्येषु कुशलतां सम्पादयेयुः। सर्वविधकर्मसु शुचितां धारयेयुः। बालानां पोषणं, पत्युः आज्ञया धर्माचरणमित्यादिनार्योचितकर्त्तव्यानि इत्यादिभिः बिन्दुभिः व्यवहारिकजीवनाय सूत्राणि प्रदत्तानि।

**सत्सङ्गतिः-** बुद्धिमानैः जनैः सर्वदा सत्सङ्गतिः स्वीकरणीया। कुसङ्गैः दोषाः जायन्ते। सत्सङ्गैः गुणा : जायन्ते।

**न कुर्यादसतां सङ्ग सतां सङ्गः समाश्रयेत् ।**
**सङ्गादेव हि जायन्ते सर्वे दोषा गुणास्तथा ।।**[18]

जनैः जीवने न कदापि मदिरापानं, द्यूतं, परस्त्रीगमनमांसाहारग्रहणादिकं करणीयम्। सात्विकाहारः स्वीकरणीयः । सर्वभूतेषु पशुपक्षीनृषु प्रीतिः स्यात्। अतन्द्रितस्सन् त्रिकालसन्ध्यां कुर्यात्।

**अतिथिसत्कारज्ञानम्-** अभ्यागतानाम् अतिथीनां जलपानेन, भोजनेन सत्कारं कुर्यात्। 'अतिथि देवो भव' इति अस्माकं वैदिकी परम्परा। परम्परामनुसृत्य अभ्यागतानाम् अतिथीनां यथोचितं सम्माननं करणीयम्। देवानां कृते नैवेद्यं विनिवेद्य अतिथीन् भोजयित्वा यः भुनक्ति स नरः अन्नपाकदोषेण, दुर्द्रव्येण, दानग्रहणदोषेण न लिप्यते।[19]

एतदतिरिच्यापि देवपूजनविधानं परोपकारपरायणं, पुरुषार्थमहत्त्वम्, त्यागमहत्त्वम्, धर्ममेव मित्रम्, वित्तोपयोगनिर्देशः, योगाभ्यासम्, सांख्यशास्त्राध्ययनादिविषयाणां समावेशः श्रीमद्योगगीतायाः प्रथमेऽध्याये प्राप्यते। मनुष्यकर्त्तव्यनिरूपणाख्ये प्रथमेऽध्याये मानवोचितकर्त्तव्याकर्त्तव्यनिरूपणं सम्यक्तया प्रतिपादितम्।

**सांख्यशास्त्रं च जानीयात्तत्त्वानां निर्णयो यतः ।**
**ब्रह्मज्ञानमनुप्राप्य गच्छेन्मोक्षपदं परम् ।।**[20]

**सन्दर्भाः –**

1. प्रणम्य परमेशानं विश्वोत्पत्त्यन्तकारणम्।
   गुरूणां च पदाम्भोजं गीताशास्त्रं विरच्यते॥ - श्रीमद्योगगीता 1.1
2. पृथिव्याः पूर्वदेशेषु पुरमेकं मनोहरम्।
   अस्ति रम्यतरं लोके परमं मण्डन भुवः। तत्रैव- 1.2
3. नानावृक्षसमाकीर्णः ........।
   ............रचनाभिरलङ्कृतम्। तत्रैव- 1.3-4
4. धार्मिकैः पुरुषैर्युक्तं विद्वज्जनसमाश्रम्।
   टीकमदुर्गसञ्ज्ञं तत्सर्वशोभासमन्वितम्॥ 1.5
5. तस्य राजा महाप्राज्ञः........सत्यधर्मपरायणः। 1.6-7
6. नानावृक्षलतोपेतं .....हितकारणात्। 1.8-12 (पुष्करवर्णनम्)
   तत्राश्रमपदं रम्यं ......प्रश्नमेव विचक्षणः। 1.13-17 (ब्रह्मानन्दाश्रमवर्णनम्)
7. श्रीमद्योगगीता 1.18
8. श्रीमद्योगगीता 1.19-21
9. श्रीमद्योगगीता 1.22
10. श्रीमद्योगगीता 1.23
11. श्रीमद्योगगीता 1.24
12. श्रीमद्योगगीता 1.25
13. विद्यां परि......सर्वार्थसाधनम्। 1.26
14. श्रीमद्योगगीता 1.27
15. षोडशाधिकवर्षो वा ......नोद्वहेदज्ञानां क्वचित्। 1.28-30
16. श्रीमद्योगगीता 1.31
17. श्रीमद्योगगीता 1.33-34
18. श्रीमद्योगगीता 1.43
19. श्रीमद्योगगीता 1.48
20. श्रीमद्योगगीता (श्रीब्रह्मानन्दमोक्षगीता) 1.59

*सहायकाचार्या*
*सर्वदर्शनविद्याशाखाः,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*

# संस्कृतस्वातन्त्र्यवीरः अल्लूरिसीतारामराजूः

डॉ. अमृताकौरः



(**शोधसारांशः** - अमृतमयेऽस्मिन्देशे भारतदेशः स्वसंस्कृतेः परम्परायाः श्रद्धायाः देशभक्तिभावनायाश्च कृते प्रसिद्धः वर्तते। यदा आङ्ग्लानां शासनम् आसीत् तदा स्वातन्त्र्यवीरा अहर्निशं स्वतन्त्रतायै आन्दोलनम् आरब्धवन्तः। तेषाम् आन्दोलनस्य एव परिणामः वर्तते यद् अद्य भारतदेशः स्वतन्त्रो वर्तते। स्वतन्त्रताम् अवाप्य पञ्चसप्ततिवर्षाणि अभवन् । अतः 2022तमे वर्षे स्वतन्त्रतायाः अमृतमहोत्सवस्य आयोजनं क्रियमाणं वर्तते। स्वतन्त्रायाः कृते महात्मागांधी, वीरसावरकरः, मौलाना अबुल कलाम आज़ादः,श्रीरंगभट्टलवार: बाळारावव्यंकटेशः, भगतसिंहः, लालालाजपतरायः, पण्डितक्षमारावः, अल्लूरिसीतारामराजूः, बालगङ्गाधरतिलक इत्यादयः स्वातन्त्र्यवीराः आसन्। एतेषु स्वातन्त्र्यवीरेषु भारतस्य आन्ध्रप्रदेशीयः स्वातन्त्र्यवीरः ज्यौतिषशास्त्रज्ञः हस्तरेखाविज्ञानी अल्लूरिसीतारामराजूरन्यतम आसीत् । अमुं विषयम् अधिकृत्य शोधपत्रमिदं प्रस्तूयते।

भारतस्य प्रधानमन्त्रिणा नरेन्द्रदामोदरदासमोदीवर्येण गुजरातराज्यस्थे साबरमती इत्यस्मिन् आश्रमे स्वतन्त्रतायाः अमृतमहोत्सवस्य (India@75) एकविंशत्यधिकद्विसहस्रतमे वर्षे मार्चमासस्य द्वादशदिनाङ्के उद्घाटनं कृतम्। भारतस्य स्वतन्त्रतायाः पञ्चसप्ततिवर्षाणि अभवन् अतः भारतसर्वकारेण स्वतन्त्रतायाः अमृतमहोत्सवस्य आयोजनकार्यक्रमस्य एका शृंखला प्रचाल्यते। महोत्सवोऽयं जनानां प्रतिभागित्वेन जनोत्सवरूपेण आयोज्यमानः वर्तते।

अस्य अमृतमहोत्सवस्य नीतीनां योजनानां निर्माणं कर्तुं भारतस्य गृहमन्त्रिणः अध्यक्षतायाम् एका राष्ट्रियक्रियान्वयनसमितिः सङ्घटिता। एकविंशत्यधिकद्विसहस्रतमवर्षस्य मार्चमासस्य द्वादशदिनाङ्काद् आरभ्य द्वाविंशत्यधिकद्विसहस्रतमवर्षस्य अगस्तमासस्य पञ्चदशदिनाङ्कपर्यन्तं पञ्चसप्ततिसप्ताहात्मकम् आयोज्यते। प्रधानमन्त्रिणा साबरमत्याश्रमात् पदयात्रा आरब्धा। इयं पदयात्रा एकपञ्चाशताधिकद्विशततममीलपरिमिता दीर्घा आसीत्। अयं प्रथमः राष्ट्रवादिगतिविधिरासीत् यत्र महिलाप्रतिभागिनोऽपि आसन् तथा च **सविनयावज्ञान्दोलनयोः** आरम्भः अभवत्।

सम्पूर्णभारते सर्वत्र हर्षोल्लासेन पञ्चसप्ततितमस्य स्वतन्त्रतायाः अमृतमहोत्सवस्य आयोजनं क्रियमाणं वर्तते। अस्मिन् स्वतंत्रतायाः अमृतमहोत्सवे आन्ध्रप्रदेशीयः स्वातन्त्र्यवीरोऽल्लूरिसीतारामराजूरन्यतमः वर्तते। अस्मिन् अमृतमहोत्सवे भारतस्य प्रधानमन्त्रिणा नरेन्द्रदामोदरदासमोदीवर्येण जुलाईमासस्य चतुर्थे दिनाङ्के अल्लूरिसीतारामराजूदेशभक्तस्य पञ्चविंशत्यधिकैकशततमजयन्तीम् उपलक्ष्य अस्य स्वातन्त्र्यवीरस्य त्रिंशत्फीटदीर्घकांस्यप्रतिमायाः उद्घाटनं कृतम्। तत्र च उक्तं बलिदानस्य अमूं धराम् आगत्य गौरवम् अनुभवामि। आदिवासिनः देशस्य स्वतन्त्रतायाः कृते साहसपूर्णं योगदानं दत्तवन्तः तेषां देशभक्तिना एव स्वतन्त्रतायाः वातावरणमिदं निर्मितम्। तेन आन्ध्रप्रदेशस्य तटवर्तीजनानाम् आदिवासिनां कृते आरब्धस्य रम्पाविद्रोहस्य मान्यविद्रोहस्य चापि शतवर्षाणि व्यतीतानि।

अल्लूरिसीतरामराजूस्वातन्त्र्यवीरः एकं भारतम्, श्रेष्ठभारतम् इत्यस्य उदाहरणमस्ति। अयं स्वातन्त्र्यवीरः आङ्ग्लानां विरुद्धं गुरिल्लाप्रतिशोधेन प्रसिद्धोऽभवत्। गुरिल्लायुद्धम् अर्थात् अनियमितयुद्धम् अर्थात् यस्मिन् लघुसमूहे एकत्रीभूय जनाः बृहत्सेनायाः विरुद्धम् अकस्मात् युद्धं कुर्वन्ति यथा- हिट एण्ड रन इति रणनीतिः, गतिशीलसहितसैन्यरणनीतिः, अकस्मादाक्रमणमित्यादयः।

अयं स्वातन्त्र्यवीरः आन्ध्रप्रदेशस्य पश्चिमगोदावरीजनपदस्य मोग्गलुग्रामत आसीत्। अस्य जन्म सप्तनवत्यधिकाष्टादशसहस्रतमे वर्षे आन्ध्रप्रदेशस्य विशाखापत्तनजनपदस्य स्वमातामहस्य पण्डरङ्गीग्रामेऽभवत्। बाल्यकाले तस्य नाम 'रामराजू' इति आसीत्। तस्य पितुः नाम 'श्रीवेंकटरामराजू' इति मातुः च नाम सूर्यनारायणम्मा आसीत्। संयुक्तपरिवारे त्रिषु पितृव्येषु सः एव ज्येष्ठः पुत्रः। तस्य अनुजाः रामकृष्णमराजू, रंगराजू रामभद्रराजू इति च आसन्। तस्य पिता वेंकटरामराजूः संस्कृतम् आङ्ग्लं च जानाति स्म । वेंकटरामराजूमहोदयस्य पितामहस्य भगिनी राजयम्मा पण्डितेति उपाधिं प्राप्तवती। अतः तस्य परिवारे बहवः सम्बन्धिनः संस्कृतं जानन्ति स्म तेनैव कारणेन सोऽपि संस्कृतम् अधिगतवान्।

तस्य पिता छायाचित्रकाररूपेण चित्रग्राहकरूपेण च तिलक, लालालाजपतरॉय, कोडीराममूर्त्यादीनां प्रसिद्धानां विप्लववीराणां चित्राणि स्वीकृतवान्। चतुरधिकैकोनविंशतितमे वर्षे वन्देमातरम् इति आन्दोलने भागं गृहीत्वा प्रभाविरूपेण तम् आन्दोलनम् अग्रे नीतवान् । अतः स्वगृहे वन्देमातरम् मनदे राज्यम् इति तेलुगभाषायाः वचनमिदं रामराजूः स्वमनसि संस्थाप्य स्वतन्त्रतायाः आन्दोलने सहयोगं दत्तवान्।

अल्लूरिसीतारामराजू न केवलं स्वातन्त्र्यवीरः अपितु तपस्वी, ज्यौतिषज्ञः, हस्तरेखाविज्ञानस्य च ज्ञाता आसीत्। हिमालये तपः कृत्वा प्रत्यागमनकाले जलं पातुं विशाखापत्तनम् प्रदेशस्य गोलुगोंडाजनपदस्य कृष्णदेवीपेटग्रामे एकस्य गृहस्य समीपं गतवान्। गृहस्य स्वामिनः नाम चितकलाभासकुरुडु आसीत्। सीतारामराजूं दृष्ट्वा कान्तियुक्तोऽयं जनः कः? कुत्र निवसति ? इति सः पृष्टवान् तर्हि रामराजू उत्तरं दत्तवान् यदहं ब्रह्मचारी अस्मि मम निश्चितः पत्रसङ्केतः न भवति इति । एवम् उक्त्वा धारकुण्डाजनानां साहाय्यं कर्तुं धारकुण्डास्थानं प्रति प्रस्थितवान्। रामायण-महाभारतयोः प्रवचनानि तत्रत्यान् ग्रामीणजनान् श्रावयति स्म। आदिवासिनां कृते रम्पान्दोलनस्य नेतृत्वं कृतवान्। दिवसे गीतायाः वचनानि श्रावयन् जनान् प्रेरयति स्म। रात्रौ क्रान्तिवीररूपेण आङ्ग्लानां विरुद्धं योजनां करोति स्म। अस्य स्वातन्त्र्यवीरस्य नेतृत्वे रम्पाविद्रोहः सफलोऽभवत्।

अस्य स्वातन्त्र्यवीरस्य विषये महात्मागांधिना उक्तं यत् -

Though I don't agree with Sri Rama Raju's revolutionary ways, his spirit of adventure, uncompromising commitment, sense of purpose, simple living are for us to emulate. I cannot support violent revolution. Yet I cannot help but shower my praise on Sri Rama Raju, a courageous son, simple individual and treasure of sacrifice.

If only our youth fight for freedom by following his qualities of strength, service and sacrifice, commitment to a cause how wonderful it would be![1]

नेताजीसुभाषचन्द्रबोसेन अल्लूरिसीतारामराजूविषये उक्तं यत्यदि अल्लूरिसीतारामराजूस्वतन्त्रवीरः

स्वतन्त्रतासङ्ग्रामस्य मुख्यधारायाः स्वराज्यविषयकाभियाने भागमग्रहीष्यत् तर्हि देशस्य कृते अद्भुतपरिणामः अभविष्यत् । मुख्यधारायाः स्वराज्यविषयकाभियाने विशिष्टसाहसपूर्णकार्यस्य कृते अत्यधिकावसरं प्राप्य प्रशंसितस्वातन्त्र्यवीरेषु अन्यतमः भवेत्। सः स्वशौर्येण, देशभक्तिभावनया, लोकप्रियो अभवत्। यदि कोऽपि तस्य शैलीमनुसर्तुं साहाय्यञ्च न कर्तुं शक्नोति तर्हि प्रंशसां तु कर्तुं शक्नोति। देशः कदापि एतादृशं स्वातन्त्र्यवीरं न विस्मरेत्।

If only Sri Rama Raju had been in the main stream of freedom struggle, how wonderful it would be! He might have had more opportunities to accomplish more adventurous missions. He would have been a much more admired individual at the national level...

His spirit of courage, patriotism, made him popular all over. One may not comply with his ways but cannot help but admire. May the youth of the country forget not the courageous sons of the soil![2]

पण्डितजवाहरलालमहोदयेन उक्तं यद्- येभ्यः स्वातन्त्र्यवीरेभ्यः आङ्ग्लजनाः बिभ्यति स्म अहं तान् स्वातन्त्र्यवीरान् अमूल्येषु गणयितुं शक्नोमि परन्तु 'अल्लूरिसीतारामराजू' तेषु अन्यतमः विशिष्टश्चासीत्।

I can count the likes of Sri Raju who terrorized the British on my fingers. Very rare do we see a man of his stature.[3]

अल्लूरिसीतारामराजूस्वातन्त्र्यवीरस्य संस्कृतपरिवार आसीत्। पिता पितृव्यः भ्राता इत्यादयः सर्वेऽपि संस्कृतं सम्यग्रूपेण जानन्ति स्म । सः विद्यालये संस्कृतं न अधीतवान् अपितु संस्कृतं तु तस्य संस्कारे एव आसीत्। तस्य परिवारसदस्यानां साहाय्येन संस्कृतस्य गभीरविषयान् अधिगतवान्। तेन कारणेन सः आन्ध्रप्रदेशे सामुद्रिकशास्त्रज्ञरूपेण ज्यौतिषज्ञरूपेण च ख्यातिमवाप्तवान्। भारते वर्तमानशिक्षाव्यवस्थायां बाला विद्यालयेषु आश्रिता भवन्ति परं पुराकाले तथा नासीत्। बालानां कृते तेषां परिवार एव शिक्षास्थलं भवति स्म। अतः ते संस्कृतस्य शास्त्राणां ज्ञानं स्वपरिवारेभ्यः प्राप्तवन्तः। यदा तपःकाले लोमशद्वयं तेषां पार्श्वे आगत्य उपविष्टं तदा भगवत्स्वरूपं मत्वा अधोलिखितश्लोकद्वयं तैः उक्तं यत् -

**श्रीपार्वतीनाथचिन्मयपरमेश**
**नंदिवाहनसांबनागभूष**
**गंगाजटाजूट अंगजहरयीश**
**भुंगीशसन्नूतमृत्युन्नाश ।।**
**श्वेतवर्णशुभाङ्गोग्रभूतनाथ**
**नीलकंदरनिखिलेशनिगविनुत**
**परमपुरुषजगन्नाथभक्तवरद**
**तंड्रि पाण्डवनगवासधर्मलिङ्गम् ।।**

अस्य स्वातन्त्र्यवीरस्य रम्पाविद्रोहेण ब्रिटिशजनाः भीताः अभवन्। सः आदिवासिनां कृते आन्दोलनं

कृतवान् तान् आदिवासिजनान् संस्कृतमपि पाठितवान्। रामायणमहाभारतयोः प्रवचनानि अपि श्रावितवान्। न केवलं स्वतन्त्रतासङ्ग्रामे तस्य वीरत्वम् अपितु संस्कृतस्य ज्ञानेन सः संस्कृतस्वातन्त्र्यवीरो मन्यते। सः स्वहस्तेन गजशास्त्रम्, अश्वशास्त्रम् इत्यादीन् संस्कृतग्रन्थान् तेलुगुलिप्यां लिखितवान्। 'विप्लववीरुडू' इति अस्मिन् पुस्तके अनेन लिखितानां शास्त्राणां प्रमाणानि अपि उपलब्धानि सन्ति। संस्कृतशास्त्रैः प्रेरितः अयं संस्कृतस्वातन्त्र्यवीरः सामुद्रिकशास्त्रे अपि निपुणः आसीत्। अतः एतादृशम् अल्लुरिसीतारामराजूम् आधरीकृत्य विभिन्नभाषासु बहूनि चलचित्राणि अपि निर्मितनि सन्ति। सुरभारतीसमुपासकाः स्वतन्त्रतायाः अमृतमहोत्सवमुपलक्ष्य एतादृशस्य अज्ञातसंस्कृतस्वातन्त्र्यवीरस्य विषये ज्ञातुं शक्नुवन्ति।

**सन्दर्भाः -**

1. Young India, 18-7-1929.
2. Young India, 18-7-1929.
3. Young India, 18-7-1929.

**सन्दर्भग्रन्थसूची -**


1. M.V.R.Sastry, ViplavaVeerudu Alluri Seetaramaraj, Navaratna book house, 2015.
2. Frederic P. Miller, Agnes F. Vandome, McBrewster John, Alluri Sita Rama Raju, VDM² Publishing
3. RavindrasinhVaghela. AlluriSeetarama Raju The Great Warrior of India, Ravindrasinh Vaghela. E-Book
   https://www.google.co.in/books/edition/-lluri Seetarama Raju/yvE5E---QB-J?hl=en



*सहायकाचार्या (शिक्षाशास्त्रम्)*

*केन्द्रीयसंस्कृतविश्वविद्यालयः, देहली।*

# संस्कृतस्य कवीनां काव्येषु स्वातन्त्र्यपरकं चिन्तनम्

**डा. प्रमोद कुमार बुटोलिया**



**भूमिका**

संस्कृतस्य लेखकैः कविभिश्च स्वलेखन्या भारतीयानां मनस्सु स्वतन्त्रतायाः भावना उद्भाविता। काव्यानां माध्यमेन ते जनानां हृदयेषु राष्ट्रियभावनायाः निर्माणं कृतवान्। एते कवयः स्वकाव्यसृष्ट्या जनानाम् अन्तरङ्गं स्पृष्टवन्तः। जनेषु एषा भावना उदिता यत् वयं भारतमातरं परतन्त्रतायाः कष्टात् मोचयितुं शक्नुमः। अस्य राष्ट्रस्य स्वातन्त्र्ये एतेषां सर्वेषां लेखकानां महत् योगदानम् अस्ति। अतः वयं केचन प्रमुखसंस्कृतलेखकान् तेषां कृतीः च अधः निरूपयामः -

**1. गङ्गाप्रसाद उपाध्यायः**

अमीषां जन्म उत्तरप्रदेशस्य एटाजनपदे नदरै इति ग्रामे 1881 तमे अभवत्। सः स्वस्य आर्योदय-महाकाव्यस्य माध्यमेन देशवासिनां कृते उक्तवान् यत् देशवासिनः परस्परं ईर्ष्याद्विषादिकं विस्मृत्य वयं संघटिताः भवेमश्चेद् एव वयम् आङ्ग्लान् इतः निष्कासयितुं समर्थाः भविष्यामः। यदि वयं लघुविषयेषु परस्परं युद्धं कुर्मः तर्हि वयं कदापि स्वातन्त्र्यं न प्राप्स्यामः।

यथा हि -

**पश्येत् को वा स्वहितविषयान् स्वार्थभावान् विहाय।**
**रक्षेत् को वा रिपुणगणकराद् देशधान्यं धनं वा।**
**कुर्यात् को वा परवशहतां मातरं शल्यशून्यां**
**को वा भव्यां भरतधरणीं मोचयेच्छत्रुपाशात्।।**

कविः पुनरपि कथयति यत् - यदि वयं चिन्तयन्तः स्मः यत् अन्यः कोऽपि जनः एतत् कार्यं करिष्यति तर्हि देशः कदापि स्वतन्त्रः न भविष्यति। अस्माभिः स्वयमेव स्वपुरुषार्थेन अग्रे गन्तव्यम् अस्ति। यथा हि -

**काङ्क्षामात्रमलं नृणां न हृदये साध्यस्य पुर्तौ क्वचित्**
**योग्यायैव ददाति वाञ्छितफलं विश्वम्भरः सर्वदा।**
**यावद् दुष्टगुणांस्त्यजेन्न जनता जातीयताघातकान्**
**तावच्छक्तिमुपैति नैव न च वा मुञ्चेत पराधीनताम्।।**

**2. रामनाथतर्करत्नः -**

रामनाथतर्करत्नवर्यस्य जन्म 1840 तमे बङ्गप्रदेशे शांतिपुरनामके स्थाने अभवत्। तेन स्वकाव्ये लिखितं यत्- पारतन्त्र्यं पुरुषस्य शौर्यं नाशयति। दासत्वं व्यक्तिस्य कृते शापः अस्ति।

यथा हि -

**हिनस्ति शौर्यं सुरुचिं रुणद्धि भिनत्ति चित्तं विवृणोति वित्तम्।**
**पिनष्टिं नीतिश्च युनक्ति दास्यं हा पारतन्त्र्यं निरयं व्यनक्ति।।**

कविः पुनरपि लिखति यत् पारतन्त्र्यस्यापेक्षया मरणं श्रेयस्करम् इति।

**असुव्यपायेष्व पि नो जहीमः स्वतन्त्रतामन्त्रमतन्द्रिणोऽद्य।**
**उपागतायां परतन्त्रतायां यशोधनानां शरणं हि मृत्युः।।**

**3. पण्डिता क्षमाराव -**

एतस्याः जन्म 1890 तमे पूनानगरे अभवम्। तस्य पितुः नाम शङ्करपाण्डुरङ्गः आसीत्। सा संस्कृतेन सह मराठीभाषायाम् आङ्ग्लभाषायां च रचनां कृतवती। 1954 तमे इयं स्वर्गलोकं गता। अस्याः देशभक्तिपरकरचनाः तिस्रः सन्ति - सत्याग्रहगीता, उत्तरसत्याग्रहगीता स्वराज्यविजयं चेति। सत्याग्रहगीता इति महाकाव्ये तया 1931-1944 ई. वर्षाणां घटनाः वर्णिताः सन्ति। अस्मिन् महाकाव्ये अनुष्टुप् छन्दः प्रयुक्तः अस्ति। कविः लिखति यत् - अहं मन्दबुद्धिः भवेयम्, परन्तु अहं स्वराष्ट्राय स्त्रियामि, तस्य महिमानं च मण्डयामि। तथापि अहं देशभक्तस्य कोटौ प्रविशामि। तत्र हि -

**तथापि देशभक्त्याऽहं जाताऽस्मि विवशीकृता।**
**अत एवास्मि तद्गातुमुद्यता मन्दधीरपि।।**

कविः लेखकः वा द्रष्टा भवति। पण्डिता क्षमाराववर्यायाः एनं काव्यं पठित्वा इदमेव सिद्धं भवति। पण्डिता क्षमाराववर्यया तस्मिन् समये स्पष्टतया लिखितम् आसीत् यत् - यदि अस्माकं देशभक्ताः एवमेव निरन्तरं प्रयतिष्यन्ति तर्हि अस्माकं देशः एकस्मिन् दिने नूनमेव स्वतन्त्रः भविष्यति। तस्य वचनमपि सत्यम् अभवत् अतः अद्य वयं स्वतन्त्रे भारते निःश्वसन्तः स्मः।

तत्रोक्तम् -

**कुर्वन्तो नित्यमेवं हि स्वातन्त्र्यं प्राप्स्यथाचिरात्।**
**स्वातन्त्र्यादपि भूतानां प्रियमन्यन्न विद्यते।।**

**4. हरिप्रसाद द्विवेदी शास्त्री -**

शास्त्रीवर्यस्य जन्म उत्तरप्रदेशस्य अलीगढ़जनपदस्य बाण इति ग्रामे 1892 तमे अभवत्। स्वकाव्ये सः कथयति यत् - गङ्गायाः तरङ्गाः अस्मान् उपदिशन्ति यत् मनुष्यः अपि आत्मानं जातिवर्गधर्मेभ्यः उपरि चिन्तयेत्। तदा एव राष्ट्रस्य प्रगतिः भविष्यति।

**त्रिधाराणां यस्मिन् पृथगगभुवां सङ्गमवरः**
**स्वरूपाद् भिन्नानां दिशति लहरीणां कलकलैः।**
**गुणैर्जात्या रूपैरिह जगति भिन्नैरपि जनै-**
**र्मिथः सङ्गन्तव्यं सुमतिसुखसिद्ध्यै सहृदयैः।।**

**5. अप्पा शास्त्री राशि वाडेकर -**

अस्य महानुभावस्य 1873 तमे कोल्हापुरजनपदे जनिं लेभिरे। तस्य पितुः नाम सदाशिवशास्त्री आसीत्।

तस्य मृत्युः 1913 तमे वर्षे अक्टोबर्-मासस्य 25 दिनाङ्के सञ्जाता। परतन्त्रतायाः जाले निबद्धं भारतं मोचयितुं कविः यथार्थशैल्याः साहाय्यं गृहीतवान्। सः स्वकवितायां (पञ्जरबन्धः शुकः) वर्णयति यत् - हे शुकः, त्वं सुवर्णपञ्जरे निबद्धः असि, त्वं सुखी भव। यथा -

**शुक सुवर्णमयस्तव पञ्जरो**
**विविधरत्नचयप्रतिमण्डितः।**
**कलयते हृदयं न मुदान्वितं**
**समपसार्य मनः क्लममन्वहम्।**

**6. हरिदाससिद्धान्तवागीशः-**

देशभक्तस्यास्य हरिदाससिद्धान्तवागीशवर्यस्य जन्म बङ्गप्रदेशस्य फरीदपुरजनपदे कोतालपारा-अनाशिया इति ग्रामे 1876 तमे वर्षे अभवत्।

अनेन किशोरावस्थायां (15 वर्षे प्रथमः) 'कंसवधम्' इति नाटकं लिखितम्। आहत्य अनेन चत्वारि नाटकानि लिखितानि - 'विराजसरोजिनी', 'मीवरप्रतापम्', 'शिवाजीचरितम्', 'बङ्गीयप्रतापम्' चेति। एतेषु नाटकेषु मातृभूमेः भक्तेः निष्ठायाः रक्षायाश्च भावना प्रकाशिता अस्ति। किञ्च सैनिकानाम् जीवनशैल्याः परिचयोऽपि प्रदत्तः। 'बङ्गीयप्रतापम्' इति नाटकस्य प्रथमाङ्के शङ्करनामकेन पुरुषेण गायितेन गीतेन यवनैः निर्मितस्य अराजकतायाः चित्रणं कृतम् अस्ति। द्वितीयाङ्के श्रीनिवासनामकस्य वैष्णवभिक्षुस्य गीते जीवनस्य भंगुरता-आध्यात्मिक-अभ्यासस्य च वर्णनम् अस्ति। तृतीयाङ्के विष्कम्बकस्य आरम्भे मत्स्यजीविनां प्राकृतगीतेन नाटकस्य प्राकृतं वर्धितम् अस्ति। पञ्चमे अंके नृत्यगीतानाम् आयोजनेन विजयः प्रकटितः अस्ति।

**7. स्वामी भगवदाचार्यः -**

इदं हि अत्यन्तं रोचकमस्ति यत् रामानन्दसम्प्रदायस्य विभूतिः वैष्णवाचार्यस्वामिनः भगवदाचार्यस्य काव्यमाला स्वतन्त्रतान्दोलने महत्वपूर्णस्थानं आवहति। काशीवास्तव्ये श्रीमठे वासरतः भगवदाचार्यः स्वाधीनतासंग्रामस्य पूर्णसमर्थकः आसीत्। भगवदाचार्येण रचितानि भारतपरिजातम्, पारिजातपहारम् पारिजातसौरभम् चेति काव्यानि संस्कृतसाहित्ये वैशिष्ट्यं भजन्ते। भगवदाचार्येण महात्मागान्धिनः जन्मना आरभ्य साबरमती इति आश्रमस्य स्थापनं यावत् कालस्य ऐतिह्यम् 'भारतपरिजातम्' इति ग्रन्थे उल्लेखितमस्ति।

भगवदाचार्येण 'पारिजातापहारम्' इत्यस्मिन् भारत-छोड़ो-आन्दोलनस्य इतिहासः तथा 'पारिजातसौरभम्' इत्यस्मिन् गान्धिनः स्वर्गारोहणं यावत् वर्णनं कृतमस्ति। 'भारतपरिजातम्' इति ग्रन्थस्य प्रकाशनं दक्षिण अफ्रिका इति देशात् अभवत्। यतः देशस्य स्वतन्त्रतायाः पूर्वं जनचेतनापरककवितानां प्रकाशनस्य अनुमतिर्नासीत्। गङ्गातटे वासरताः नैके नाथपंथिनः, सन्तसमाजः, पुरोहिताश्च स्वामिनः भगवदाचार्यस्य सन्निधौ स्वतन्त्रतायाः आन्दोलने उत्साहेन भागम् अगृह्णन्।

देशस्य मुक्तिं संसाधयितुं बहवः संस्कृतसमाराधकाः कवयः लेखकाश्च महत्त्वपूर्णां भूमिकां निरवहन्। एकोनविंशे विंशे च शतके प्रचलितस्य स्वातन्त्र्यसमरस्य वैशिष्ट्यमिदमासीत् यत् अस्मिन् व्यक्तिविशेषस्य स्थाने समेषां भारतीयानां जागृता आन्तरिकभावना आङ्ग्लोपनिवेशवादं नाशयितुं प्रस्तुता आसीत्। यथा एषा भावना

देशस्य अन्यभाषासु लिख्यते भाष्यते च, तथैव संस्कृतभाषासाहित्ये अस्याः भावस्य स्वराः स्पष्टतया श्रूयन्ते। एतस्मिन् स्वातन्त्र्यसङ्ग्रामेण संस्कृतसाहित्यस्य सम्बन्धः नैकविधः वर्तते। स्वतन्त्रतायाः पक्षे संस्कृतकविभिः यानि लेखनानि लिखितानि। तत्र आङ्ग्लशासनस्य अन्तर्गतं भारतीयैः यादृशं पारतन्त्र्यम् अनुभुक्तम् तादृशमेव निदर्शनं संस्कृतलेखकानां कृतीषु प्राप्यते।

**सन्दर्भग्रन्थसूची**


1. डॉ. जगन्नाथ पाठक, (2000) आधुनिक संस्कृत साहित्य का इतिहास, उ. प्र. संस्कृत संस्थान प्रकाशन, लखनऊ।
2. आचार्य देवी शंकर मिश्र व डॉ. राजकिशोर सिंह, (1982) संस्कृत साहित्य का इतिहास, प्रकाशन केंद्र, लखनऊ।
3. डॉ उमाशंकर शर्मा 'ऋषि', (2017) संस्कृत साहित्य का इतिहास, चौखम्बा भारतीय अकादमी, वाराणसी।



*प्राध्यापक,*
*शिक्षाशास्त्रविद्याशाखाः*
*केन्द्रीयसंस्कृतविश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*

# धूमकेतवः

डॉ. शुभस्मिता मिश्रः



यत्र ग्रहर्क्षताराधूमकेतूल्काकाशगंगामानवभूर्भुवादयः चतुर्दशलोकाश्च समन्विताः सन्ति तदेव ब्रह्माण्डम्। ब्रह्माण्डेऽस्मिन् बहवः ज्वतिर्पिण्डाण्डाः विद्यन्ते। ते सर्वे नक्षत्राणि ग्रहादयश्च सन्ति। तेषु आकाशीयपिण्डेषु येषां पिण्डानां विषुवांशाः क्रान्त्यंशाश्च स्थिराः तानि नक्षत्राणि। नक्षत्राणि सूर्यसमानानि, सूर्याद् बृहत्तराणि वा सन्ति। तानि सर्वाणि स्वौज्ज्वल्येनैव प्रकाशितानि भवन्ति। परन्तु कतिपयः एतादृशाः पिण्डाः सन्ति येषां क्रान्त्यंशाः विषुवांशाश्च चलाः सन्ति। ते सर्वे अप्रकाशकाः, सूर्यादल्पपरिमाणकाः, सूर्यं परितः भ्रमणशीलाः च सन्ति। ते सर्वे ग्रहाः, उपग्रहाश्च सूर्यप्रकाशेन प्रकाशिताः भवन्ति। सूर्यः एकं नक्षत्रम्। सूर्यसदृशानि दशसहस्रकोटिमितानि नक्षत्राणि अस्माकं आकाशगंगा (Milkyway) नामके पिण्डाण्डे वर्त्तन्ते। एवमेव आकाशगंगासदृशाः दशसहस्रकोटिमिताः ततोऽधिकसंख्यका वा पिण्डाण्डाः अस्माकं ब्रह्माण्डे विद्यमानाः सन्ति। आकाशगंगा (Milkyway) नामके पिण्डाण्डे बहवः सौरपरिवाराः सन्ति। ग्रहाः, उपग्रहाः, क्षुद्रग्रहाः, वामनग्रहाः, उल्काः, धूमकेतवश्च अस्य परिवारस्य प्रमुखाः सदस्याः सन्ति। अस्माकं सौरपरिवारस्य (सौरमण्डलस्य) मुख्यः संचालकोऽस्ति सूर्यः। सूर्यः सौरमण्डलस्य मध्ये वर्त्तते। सर्वे ग्रहाः तमभितः परिभ्रमन्ति। अर्थात् सूर्यः बुधादीन् ग्रहान् स्वाकर्षणशक्त्या कर्षन् आत्मन् परिभ्रामयति। बुधादयग्रहाः सूर्यस्य परिक्रमा दीर्घवृत्ताकारकक्षासु कुर्वन्ति। उपग्रहाश्च ग्रहं परितः दीर्घवृत्ताकारकक्षासु भ्रमन्ति । भौमबृहस्पत्ययोः कक्षयोर्मध्ये बहवः क्षुद्रग्रहाः सन्ति। नेपचूनग्रहस्य (वरुणस्य) कक्षातः बहिः स्थितायां कुईपेर पटिकायां बहवः वामनग्रहाः वर्तन्ते। एते वामनग्रहाः स्वस्वकक्षासु परिभ्रमन् यदा कदा वरुणग्रहस्य कक्षायां प्रविशन्ति। एतान् ग्रहोपग्रहवामनक्षुद्रग्रहान् विहाय सौरमण्डले केचनैतादृशाः पिण्डाः सन्ति ये यदा कदा आकाशे दृग्गोचराः भवन्ति। विशेषतः सूर्यास्तकाले नक्षत्रावलोकनावसरेऽऽकाशस्य पश्चिमभागे, सूर्योदयकालेऽऽकाशस्य पूर्वभागे च अकस्मादेव तेषां दर्शनं भवति। तेषु ये पिण्डाः आकाशे गच्छन्तः मिनिटैककालेन विलुप्ताः भवन्ति ते उल्कापिण्डाः । परन्तु तेषु ये आकाशे बहुदिनानि यावत् दृग्गोचराः भवन्ति ते धूमकेतवः (Comets) इत्युच्यन्ते।

**धूमकेतूनां लक्षणम्-**

भौमजं, आकाशजं, दिव्यजमिति त्रिविधोत्पातकारकाः केतवः सन्ति [1]। भौमकेतवः भूकेन्द्रिकाः, भूबिम्बस्य निकटस्थाश्च भवन्ति। दिव्याकाशे भवा दिव्यासंज्ञकाः। नक्षत्राणां मध्ये ये दृश्यन्ते ते दिव्यकेतवः। ग्रहनक्षत्रस्थानं विहाय अन्तरिक्षे भवा आन्तरिक्षसंज्ञकाश्च। ध्वज-शस्त्र-गृह-वृक्ष-तुरग-कुञ्जरादिषु अग्निरूपाः ये दृश्यन्ते ते आन्तरिक्षकेतवः। ये आकाशजाः ते ग्रहकेन्द्रिकाः भ्रमणशीलाः सन्ति। नक्षत्रकेतवः नक्षत्ररूपाः, नक्षत्रकेन्द्रिकाश्च भवन्ति। वैदिकसंहितातः समारभ्य ज्यौतिषसंहितां यावत् सर्वेषु ग्रन्थेषु उत्पातकारकानां दृश्यकेतूनां वर्णनं परिदृश्यते। धूमः केतुश्चिह्न यस्य सः धूमकेतु उत्पातविशेष इति[2]। अर्थात् यस्य आकाशीयपिण्डस्य धूमेन निर्मितं पुच्छं भवति स धूमकेतुः। पुच्छयुक्तत्वात् सः पुच्छलतारक नाम्ना ज्ञायते। कमलाकरभट्टेन स्वसिद्धान्ततत्त्वविवेके उक्तं यत्-

**'ये केतवोऽरिष्टफलप्रदाः'** इति।[3] अर्थात् ये अनिष्टफलप्रदाः ते केतवः वेदेषु धूमकेतूनां विशदं विस्मृतं च वर्णनं प्राप्यते। अथर्ववेदसंहितायामपि धूमकेतूनाञ्चोल्लेखो प्राप्यते[4] -

**''उत्पाताः पार्थिवान्तरिक्षाच्छं नो दिविचरा ग्रहाः। शं नो भूमिर्वेपमाना शमुल्कानिर्हतं च यत्।।.........शं नो मृत्युधूमकेतुः शं रूद्रास्तिग्मतेजसः।''**

धूमकेतोः लक्षणप्रतिपादनावसरे संहितायामुल्लिखितं वर्त्तते यत् - धूमकेतुः अव्यक्तचारोऽस्ति। अस्य रूप-गति-प्रमाण-वर्ण-दिशा-संस्थानादयः अनिश्चिताः वर्त्तन्ते। यथोक्तम्[5]- **अथातोऽव्यक्तचारस्तु धूमकेतुः सुलक्षणः।**

पराशरेणापि उक्तम्[6]- अथानियतदिक्कालरूपवर्णप्रमाणसंस्थानो धूमकेतुः पराभविष्यतां.....।

भार्गवीये धूमकेतुलक्षणं फलं च[7]- धूमध्वजो धूमशिखो धूमर्चिर्धूमतारकाः।
एवं तावद्धूमकेतोर्लक्षणं समुदाहृतम्।।

बृहत्संहितायामपि उक्तं वर्तते यत् धूमकेतु नाम केतुः स तु अनियतगतिप्रमाणवर्णाकृतियुक्तः सर्वासु दिक्षु दृष्टः दिव्यान्तरिक्षभौमस्त्रिप्रकारो भवति। यथोक्तम्[8] -

**धूमकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक्।**
**दिव्यान्तरिक्षभौमा भवत्ययं स्निग्ध इष्टफलः।।**

संहिताग्रन्थेषु धूमकेतूनां भेदाः, तेषां संख्या, स्वरूपाणि, दर्शनगतानि शुभाशुभफलानि, फलपरिपाककालस्य च चर्चा विस्तरेण प्रतिपादितानि सन्ति। मानवाः यदा पापकर्मणिरताः भवन्ति तदा पापस्याधिक्येन पृथिव्यां विविधप्रकृतिकोपद्रवाः सञ्जायन्ते।[9] ये दिव्याः केतवस्तेऽपिशश्वत्तीव्रफलप्रदाः इति नारदसंहितायामुल्लिखितमस्ति।[10] बृहत्संहितायां वराहेण उक्तं वर्त्तते यदस्य केतोः उदयास्तमयोः दर्शनं गणितविधिना न ज्ञातुं शक्यते[11]।। त्रिविधेषु केतुषु ये केतवः ग्रहाणां नक्षत्राणां तारकाणां च मध्ये दृश्यन्ते ते दिव्योत्पातकारकाः धूमकेतवः। वराहमातानुसारं केतोः अस्तादनन्तरं पक्षत्रयं दिनानि यावदनिष्टफलानि भवन्ति। पक्षत्रयादनन्तरं शुभाशुभफलानि प्रयच्छन्ति। अर्थात् केतोः दर्शनं यावन्ति दिनानि भवन्ति तस्यास्तादनन्तरं पक्षत्रयात् दिनात् परतस्तावान् मासान् स्वकीयं फलं प्रयच्छति। यावत्संख्यान् मासान् दृश्यो भवति तावत्संख्यानि वर्षाणि स्वफलं ददाति। यथोक्तम्[12]-

**यावन्त्यहानि दृश्यो मासास्तावन्त एव फलपाकः।**
**मासैरब्दांश्च वदेत् प्रथमात् पक्षत्रयात् परतः।।**

हरिवंशपुराणे कंशबधनिमित्तं केतोः दर्शनं निरूपितम्[13] -

**केतूना धूमकेतोस्तु नक्षत्राणि त्रयोदश।**
**भरण्यादीनि भिन्नानि नानुयान्ति निशाकरम्।।**

तत्र कंशबधकाले भरण्यादिनि त्रयोदशनक्षत्राणि उत्पातरूपधूमकेतुना वेधितानि जातानि इत्यनेन प्रकारेण हरिवंशपुराणे धूमकेतोः उत्पातरूपं निरूपितम्। महाभारतस्य भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तरूपेण धूमकेतोः वर्णनं प्राप्यते। महाभारतयुद्धकाले महोत्पातकारकः धूमकेतुः पुष्यादीषु एकादशनक्षत्रेषु विचरणं कृतवान्। यथोक्तम्[14]

**धूमकेतुर्महाघोरः पुष्यमाक्रस्य तारकम्।**
**सेनयोरशिवं घोरं ज्येष्ठामाक्रम्य तिष्ठति।।**

अनेन ज्ञायते यत् यदा केतोः दर्शनमाकाशे नक्षत्रमण्डले भवति तदा संसारे सकलचराचरं पूर्वजन्मार्जिताशुभफलानां भोगं करोति। तद्यथा वराहसंहितायाम्[15]-

**उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा।**
**अनुभवति पराकृतं तदा फलमशुभं सचराचरं जगत्॥**

अस्य धूमकेतोः उत्पत्तिविषये आधुनिकाः वदन्ति यत्- केतवः नीहारिकाकेन्द्रे आकाशगंगायाञ्चोत्पद्यन्ते। शीतपदार्थैः वायव्यतत्त्वैः, ब्रह्माण्डीयकणैः, औलोकीयद्रव्यैश्च केतवः निर्मिता इति तेषां बिम्बीयसंरचनायाः अध्ययनेन ज्ञायते। आकाशगंगायाः, नीहारिकायाश्च अध्ययनेन ज्ञायते यत् ग्रहाणामुत्पत्तेः पूर्वं सूर्येण साकं वायुरूपकमेकं गोलोत्पत्तिकारकं द्रव्यं भ्रम्यमाणमासीत्। तद् द्रव्यं सूर्येण आकृष्ट सन् तच्छक्त्या परबलयकक्षासु भ्रमणं कृतवान्। कालान्तरेण भौमादिग्रहाणामाकर्षणवशेन तद् द्रव्यं खण्डितं जातम्। ते द्रव्यखण्डाः परबलयकक्षान् विहाय दीर्घवृत्तेषु भ्रमणं कृतवन्तः। तेषु ये गुरुपरिवारीयाः ते दीर्घवृत्ताकारमार्गे परिभ्रमन्ति। ते द्रव्यखण्डाः धूमकेतु नाम्ना परिचिताः। आकाशे रात्र्याः सर्वप्रहरेषु चन्द्रवत् कतिपयदिनपर्यन्तं दृश्यन्ते। तेषां परिमाणं पृथिव्याः बृहत्तराः, मध्यममानं दशपृथ्वीसमं च।

**धूमकेतोः स्वरूपम् -**

केतवः ग्रहेभ्यः नक्षत्रेभ्यः भिन्नाः गोलीयावयवाः सन्ति। धूमकेतूनां परिमाणः पृथिव्याः परिमाणात् बृहत्तरो भवति। एते सर्वे सूर्य इव विशालकायाः भवन्ति। प्रतिवर्षं विंशतिसंख्यकाः धूमकेतवः पृथिव्यामवलोक्यन्ते। तेषु प्रायः त्रयः संख्यकाः, चत्वारः संख्यकाः वा नूतनाः धूमकेतवः दृष्टिपथमवतरन्ति। प्रायशः केतवः गुरु-सूर्य-शनि-यूरेनस-नेप्च्यून प्लूटोकक्षाभ्यः समागच्छन्ति। धूमकेतवः प्रायः पषाणसूक्ष्मरजहिममिश्रितवाष्पैः सम्मिलिताः भवन्ति। प्रमुखतया एते हिम-कार्बन डाईऑक्साइड्-मीथेन-अमोनिया-सिलिकेट कार्बनिकमिश्रणैः निर्मिताः सन्ति। एते स्वपरिक्रमणकाले यदा सूर्यसमीपमागच्छन्ति तदा तेषां पृष्ठभागे एकः दीर्घाकारः पुच्छः समागच्छति। तदैव अतिप्रकाशयुक्तदीर्घपुच्छयुक्तधूमकेतुः दृग्गोचरो भवति। अस्माद् कारणादेते 'पुच्छलतारा' नाम्ना प्रसिद्धाः सन्ति। अल्पप्रकाशकाः दूरदर्शकयन्त्रेणैव दृश्यन्ते। धूमकेतवः यथा यथा भूमेः समीपमागच्छन्ति तथा तथा दिवायामपि दृग्गोचराः भवन्ति। अस्य प्रथमदर्शनकाले पुच्छो न दृश्यते। यथा यथा भुवः समीपमागच्छन्ति तथा तथा पुच्छस्य दर्शनं भवति पुनः दूरे गते पुच्छं अन्तर्धते। धूमकेतोः त्रिणि मुख्यानि अङ्गानि सन्ति। तानि यथा- (1) शीर्षम् (कोमा), (2) नाभिः, (3) पुच्छश्च।

**शीर्षम्-** यथा जीवमात्रस्य अङ्गेषु शीर्षं मुख्याङ्गत्वेन गण्यते तथैव धूमकेतोः शीर्षम् मुख्यम्। इदं वृत्ताकारं, महापरिमाणकं, मेघसदृशं धूमिलं भवति। अस्य व्यासप्रमाणं 15000 क्रोशार्धादधिको भवति। इदं नाभ्यावरणरूपं वर्त्तते। धूमकेतोः शीर्षभागः यदा सूर्यै अत्यधिकमुष्णो भवति तदा तस्य चतुर्पार्श्वे एक वायुगोल उत्पद्यते। तदेव कोमा (Coma) इत्युच्यते। कोमा मुख्यतः जल- अमोनिया- कार्बनडाईऑक्साइडमिश्रितो भवति। वस्तुतः धूमकेतुः यदा सूर्यं निकषा समागच्छति तदा धूमकेतोः हिमपिण्डाः सूर्यकिरणे उष्णं भूत्वा तस्य नाभेः चतुर्पार्श्वे वायुगोलमुत्पादयति। तत्र स्थितवायुपदार्थः श्वेतमेघवत् दृश्यते।

**नाभिः (Nucleus)-** धूमकेतोः मध्यभागं नाभिरूच्यते। धूमकेतोः क्वचित् द्वे नाभी, क्वचिदेका नाभिः

च भवति। अस्याः आकारः गोलाकारः। अस्य परिमाणश्च 100 मीटरतः-40 किलोमिटरमितम् ततोऽधिको वा सम्भवति। नाभेः निर्माणं पाषाण- सूक्ष्मरजकण-हिम कार्बनमोनोऑक्साईड- कार्बनडाइऑक्साइड- मीथेन- अमोनियादिभिः वायुभिः भवति।

**पुच्छम्**- धूमकेतोः महत्त्वपूर्णमङ्गं तस्य पुच्छमस्ति। तं तस्य शीर्षाद् निस्सरति। शीर्षगतः श्वेतमेघसदृशः वायुपदार्थः पुच्छं जनयति। क्रमेण अयं पुच्छीयवायुपदार्थः विनष्टो भवति। पुच्छं नाभेः पश्चात् तिष्ठति। धूमकेतुः यदा सूर्यस्य निकषा आगच्छति तदा तस्य नाभेः पश्चादेकं पुच्छं जायते। तं पुच्छं सर्वप्रथमं सूर्यस्य प्रतिकूलदिशायां निस्सरति। ततः परं यथा यथा सूर्यस्यातिसमीप्यं गच्छति तथा तथा तस्य दैर्घ्यं दीर्घतरं भवति। पुच्छं सूक्ष्मरजकणहिमबाष्पयुक्तं भवति। तं पुच्छं द्विविधम्। (1) Dust tail, (2) lon tail। पुच्छस्य कारणं सूर्यकिरण एव। तत्र सूक्ष्मरजकणैः युक्तं पुच्छं Dust tail (विद्युतिकृतपरमाणु) इत्युच्यते। दीर्घनीलवर्णाकारविद्युतिकृतपरमाणुभिः निमितं पुच्छं lon tail (Plasma tail, Gas tail) इत्युच्यते।

पुच्छस्यास्य तिस्रो गतय अपि सन्ति। प्रथमा गतिः तस्य नाभेः प्रतिसेकिण्डं एकक्रोशार्धगत्या बहिर्निस्सरति। यथा यथा पुच्छभागः शीर्षाद् दूरं गच्छति तथा तथा सूर्यकिरणप्रणोदाल्पत्वात् तस्य परिमाणं वर्धत इति द्वितीया गतिः। तृतीया सूर्यं परितः भ्रमणशीलत्वात् पुच्छस्य सूर्यदूरवर्तिभागः मन्दगत्या तथा च सूर्यसमीपवर्तिभागः तीव्रगत्या भ्रमति। तस्य पुच्छगतानि बाष्पाणि विषपूर्णानि सन्ति।

**धूमकेतोः परिक्रमणम् -**

एतेषां परिभ्रमणकक्षाः लघुकक्षातः समारभ्य महाकाशीयकक्षां यावत् भवन्ति। सौरपरिवारस्य सदस्यरूपाः धूमकेतवः सूर्यमभितः स्वपरिक्रमणमार्गेण परिभ्रमन्ति। एतेषु केचन दीर्घवृत्ताकारमार्गे, केचन परवलयाकारमार्गे च भ्रमन्ति। ये नियमिताः सूर्यं परितः दीर्घवृत्ताकारपथे भ्रमन्ति ते दीर्घवृत्ताकारमार्गगाः सन्ति। शेषाः ये अनियमिताः ते सूर्यं परितः परवलयाकारमार्गे भ्रमन्ति । ते परवलयाकारमार्गगाः धूमकेतवः सन्ति। ये दीर्घवृत्ताकारमार्गगाः सन्ति ते ग्रहवत् पश्चिमतः पूर्वं गच्छन्ति। तेषां दीर्घवृत्ताकारमार्गस्य एकस्मिन् नाभौ सूर्यस्तिष्ठति। दीर्घवृत्ताकारमार्गे गमनत्वात् ते निर्दिष्टकालान्तरेण पुनः पुनः दृग्गोचराः भवन्ति। एतेषां भगणकालादयः ग्रहभगणकालवत् नियमिताः सन्ति। एतेषां कक्षाणमनं साधारणम्। परन्तु परवलयाकारमार्गगाः धूमकेतवः सौरपरिवारस्यातिथिरूपेण यदा कदा आगच्छन्ति। पुनः अदृश्या भवन्ति। तेषां परवलयाकारमार्गस्य एकस्मिन् नाभौ सूर्यस्तिष्ठति। यतोहि परवलयस्य द्वे शाखे अनन्तस्थानं प्रति सर्वदा गच्छतः न कदापि तयोः मेलनं भवति अतः परवलयमार्गगाः ये धूमकेतवः सन्ति ते यदा कदा अतिथिरूपेण दर्शनयोगाः भवन्ति। एतेषां कक्षाणमनं पर्याप्तम्। परिक्रमणकाले एषामर्धाः पूर्वतः पश्चिमं, अर्धाश्च पश्चिमतः पूर्वाभिमुखं भ्रमन्ति।

टाइकोब्रीहि महोदयेन 1567 खुष्टब्दे अन्वेषितकेतोः परवलयकक्षाक्रमः चन्द्रादधिकदूरत्वं च निर्धारितः। केप्लरमहोदयेन तथा न्यूटनमहोदयेन गुरुत्वाकर्षणसिद्धान्तबलेन विभिन्नपिण्डाण्डानामाकर्षण-विकर्षणनिष्पत्या केतोः कक्षाक्रममपि निर्धारयितुं विधानं प्रदत्तम्। तत्रापि अधिकांशकेतवः परवलये भ्रमन्ति। केचन दीर्घवृत्ते विशेष केन्द्रीकगुरुत्वेननिबद्धः सन् भ्रमन्ति। दीर्घवृत्तीयकेतूनां कैक्षीकावर्तनकालः स्वल्पो भवति। परवलयेत्वधिकः। सौरमण्डलीयकेतूनामावर्त्तनकालः 3 वर्षादारभ्य 1000 वर्षाणि पर्यन्तं भवति। दीर्घवृत्ताकारमार्गगाः त्रिंशत्संख्यकाः

धूमकेतवः गुरूपरिवारीयाः, त्रयः शनिपरिवारीयाः, द्वौ वरूणपरिवारीयाः, अष्टौ इन्द्रपरिवारीयाश्च सन्ति। गुरुपरिवारीयाणां धूमकेतूनां उच्चबिन्दुः संपातबिन्दुर्वा गुरुकक्षायाः समीपे भवति। कक्षाणमनं ग्रहवत् साधारणम्। एते पश्चिमतः पूर्वं भ्रमन्ति। एतेषां भ्रमणकालः पञ्चवर्षादधिको नववर्षादल्पश्च भवति। धूमकेतवः केप्लरसूत्राण्यनुसृत्य संञ्चरन्ति। एतेषां कक्षायां केन्द्रच्युतिमहती अस्ति। एषां भगणकालः चतुःवर्षादारभ्य दशसहस्रवर्षपर्यन्तं भवति। वस्तुतः चक्षुष सर्वेषां धूमकेतूनां दर्शनं विरलमेव। दूरदर्शकयन्त्रेण एषां दर्शनं सुलभमेव। अतः यदा एते सूर्यसमीपमागच्छन्ति तदैव दृग्गोचराः भवन्ति। पूर्वकाले एतेषां विरलदर्शनात् प्रायेण रहस्यपूर्णशक्तिमत्ता मन्यन्ते। यस्य दर्शनेन पृथिव्यां बहु उपद्रवाः जायन्ते। फलतः संहिताग्रन्थेषु एतेषां केतूनां दर्शनं उत्पातकारकमिति मन्यन्ते। न केवलं संहितायामपितु वेदेषु पुराणेषु च धूमकेतूनां वर्णनं बहुषु स्थलेष्युपलभ्यते। यथोक्तं ब्रह्माण्डपुराणे[16] -

**सर्वग्रहाणामेतेषां आदिरादित्य उच्यते।**
**ताराग्रहाणां शुक्रस्तु केतूनामपि धूमवान्॥**

अपि च ऋग्वेदे[17]-असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरूदतिष्ठो विवस्वतः।
धृतेन त्वावर्धयन् आहुतधूमस्ते केतुरभवद् दिविश्रितः॥

**प्रमुखाः कतिपयः धूमकेतवस्तेषां परिचयः-**

अद्यावधिः सहस्राधिककेतवः वैज्ञानिकैः अन्वेषिताः। यथा यथा दूरदर्शकयन्त्राणां विकासो जातः तथा तथा महाकाशस्य अधिकाधिकभागदर्शनेन वैज्ञानिकाः अनेकाः नूतनाः केतवः अन्वेषितास्तथा तेषां आवृत्तिकालोऽपि साधिताः। यदा ते दृश्यन्ते तदैव तेषां दूरत्वं, बिम्बीयसंरचना, दीप्त्यंशास्तथा प्रत्यावर्तनकालश्च निश्चियते। पूर्वं तु पुच्छलतारकाणां दर्शनं आकस्मिकी खगोलीयघटना मन्यते स्म। परन्तु अद्यतः शतत्रयवर्षात्पूर्वं हैली नामकेन आङ्गलज्योतिर्विदा इयं घटना निराकृता।

अद्यतः प्रायः 300 वर्षात्पूर्वं सर्वादौ 'न्यूटन' महोदयेन 1679 तमे ख्रिस्ताब्दे एकः प्रयोगः कृतः। येन ग्रहवत् धूमकेतवः अपि सूर्यं परितः परिभ्रमन्तीति अनुमितम्। परवलयाकारकक्षाविधानेन 1337 खुष्टात् 1698 पर्यन्तं 24 दीप्तकेतूनां भ्रमणमार्गं निर्धारितवान्। परन्तु तेन धूमकेतूनां विशेष चर्चा न कृता। सर्वादौ 1682 तमे ख्रिस्ताब्दे आंङ्गलज्योतिर्विदाः Edmond Halley धूमकेतोः परिचयः दत्तवान्। फीयटमहोदयेन सौरमण्डलीयकक्षाक्रमे 11 केतोः 5100 वर्षात्मकावर्तनकालः निर्धारितः। 100 वर्षादून्यूनावर्तनकालिकाः सौरमण्डलीयाः सप्तति केतवः दीर्घवृत्तीयाः सन्ति। लाप्लसमहोदयमतेन गुरुसूर्ययोः समवेताकर्षणविकर्षणाभ्यां परवलयिकस्य दीर्घवृत्तीयपरिणामनं भवति।

यद्यपि बहव केतवः अन्वेषिताः सन्ति। तथापि तेषु Halley's Comet, Shoemaker Levy-9, Hyokutake, Billa Comet, Hale Bopp, Comet Encke, Swasaman Vasman Comet, Tempel Tuttel,Comet Wild 2, Donati, Enckes प्रभृतयः मुख्याः सन्ति।

- **हालिधूमकेतुः-** आगलज्योतिर्विदः Edmond Halley महोदयः 1682 तमे ख्रिष्टाब्दे एको महान् धूमकेतुः अदृश्यत्। सः तस्य कक्षावृत्तानि गणयित्वा तस्य परिक्रमणकालस्य मानं पञ्चसप्ततिवर्षाणि लब्धानि। तेन उक्तं यत् - अयं धूमकेतुः प्रतिपञ्चसप्ततितमे वर्षे वा षट्-सप्ततितमे वर्षे दृश्यते। अर्थात् 1758 तमे

ख्रिष्टाब्दे अस्य धूमकेतोः पुनः दर्शनं भविष्यतीति तेन उद्घोषितम्। स च धूमकेतुः हालिधूमकेतु नाम्ना परिचितः। ततः परं 1758 तमे, 1834 तमे, 1910 तमे, 1986 तमे च ख्रिष्टाब्देषु अस्य धूमकेतोः दर्शनं अभवत्। पुनश्च 2061 तमे ख्रिष्टाब्देऽस्य दर्शनं भविष्यति। अस्य उच्चबिन्दुपातबिन्दुश्च गुरुकक्षायाः समीपे वर्तते। अस्य धूमकेतोः निर्माणं जल-कार्बन्-डाईऑक्साइड-अमोनिया-रजोभिः संजातम्। हालिमहोदयेन स्वकीये Synopsis of the Astronomy of Comets नामके ग्रन्थे धूमकेतूनां कक्षायां गुरोः शनेश्च गुत्वाकर्षणप्रभावस्य गणना न्यूटनमहोदयस्य नियमोपयोगेन कृता। तेन स्वकीये सेनिका(Seneca) नामके ग्रन्थे केतुसिद्धान्तं अपि निरूपितम्।

- **बिएला धूमकेतुः**-बिएलामहोदयः अस्य धूमकेतोः आविष्कारः कृतवान्। अनेन 1826 तमे ख्रिष्टाब्दे अस्य धूमकेतोः दर्शनं कृत्वा स्वगणनया अस्य परिक्रमणकालः सार्धषड्वर्षमितः निश्चितः।
- **हयाकुटके धूमकेतुः-** अस्य परिक्रमणकालः 1000 वर्षमितः वर्त्तते। 1996 ख्रिष्टाब्दे जनवरी मासस्य 31 तमे दिनाङ्के अस्य धूमकेतोः प्रथमदर्शनं अभवत् तदा एषः भूवः सर्वाधिकः निकटतमः आसीत्। अस्य आविष्कारकः दक्षिणजापाननिवासियुसीहयाकुटकः आसीत्।
- हेलबोप्पनामकस्य धूमकेतोः आविष्कारः 1997 तमे ख्रिष्टाब्दे अभवत्। 4000 वर्षेषु एकवारं अस्य दर्शनं भवति।
- नियोवाइजधूमकेतुः- धूमकेतुः C /2020 एफ 3 नामेन परिचितस्य नियेवाइजधूमकेतोः आविष्कारः 27.03.2020 तमे दिनांके अभवत्। अस्य धूमकेतोः दैर्घः 5 k.m. 6000 वर्षेषु अस्य दर्शनं एकवारं भवति। अस्य उत्केन्द्रिकता 0.99921 तथा परवलयाकारफथे परिभ्रमति।
- एन. के.केतुः - अस्य केतोः 1786 , 1795, 1805, 1941 स्रष्टाब्देषु अन्वेषणं जातम्। अस्य धूमकेतोः ज्ञानं सर्वप्रथमे 1786 स्रष्टाब्दे जनवरीमासस्य 17तमे दिनाङ्के Pierre Mechain महोदयेन कृतम्। परन्तु कालान्तरेणास्याविष्कारः जर्मन् खगोलविदः Johann Franz Encke महोदयेन 1919 तमे ख्रिष्टाब्दे कृतः। अस्य मध्यमदूरत्वं 275000 क्रोषार्धमितमस्ति। Tourids Meteor Shower अनेन संम्बद्धो वर्त्तते। येन प्रतिवर्षं अक्टूवरनबम्बरमासद्वयेऽ स्य दर्शनं भवति।।
- इसाँनधूमकेतुः ( C/ 2021 S1)- 21 .09.2012 तमे दिनाङ्के अस्याविष्काकः अभवत्। अस्याविष्कारको स्तः Vitaly Nevsky तथा Artyom Novichanok.
- टेम्पलटटलकेतुः - अस्य परिक्रमणकालः 33 वर्षमितमस्ति। अस्याविष्कारकः होरेस् पार्नेल टटल एवं Wilhelm Tempel Leonid meteor Shower अनेन सम्बद्धो वर्त्तते।
- 1812 स्रष्टाब्दे 12PI Pons- Brooks नामकधुमकेतुः प्रथमतः समुद्घाटितस्तद् 1883, 1954 स्रष्टाब्दे च प्रत्यावर्त्य पुनः दृष्टः आसीत्। पुनः 2024 अप्रिलमासे अस्य केतोः दर्शनं भविष्यति। अस्य परिक्रमकालः 71 वर्षमितः।।
- केतु 1908 III - मोरहाउसमहोदयेन छायाचित्रप्रमाणेन 1 सितम्बर 1908 तमे वर्षे अन्वेषितम्।
- 1886 III - अस्यान्वेषणं डीौसीशप महोदयेन कृतम्। एषः अतिपरवलयिककक्षायां भ्रमति। अस्य

केन्द्रच्युतिः 1.0130। अनेन 1940 पर्यन्तं तादृशाः 8 केतवः अन्वेषिताः। अतिपरवलयकैक्षिकान्तर्गतकेतवः युगान्तचारिणः भवन्ति। आकाशे अतिपरवलयपरवलयकक्षासु भ्रमणशीलाः बहबः केतवः कदाचित् प्रबलगुरुत्वाकर्षणेनाकृष्टाः सूर्यमभितः दीर्घवृत्तीयकक्षायां परिभ्रमन्ति। केचन केतवः 100000 वर्षादनन्तरं पुनः सौरपरिवारे प्रत्यावर्त्तनं कुर्वन्ति। केचन् केतवः नक्षत्रपुञ्जेषु भ्रमन्ति तेषां परिभ्रमणकालस्तु दशलक्षवर्षादधिकः भवति। अस्माकं सौरमण्डले एतादृशाः पञ्चक्षुद्रग्रहाः सन्ति येषां वर्गीकरणं धूमकेतुमध्येऽपि क्रियते। ते सन्ति 95P/चिरोन् , 107P/विल्सन-हरिंगटोन (4015 विल्सन-हरिंगटोन) , 133P/एल्स्ट- पिजारों, 174P/एचेक्लुस, 176P/लिनेअर च। आकारानुरोधेन धूमकेतूनां षड्विधाः भेदाः भवन्ति। ते यथा Dwarf धूमकेतुः (0 तः 1.5 कि.मि. दैर्घ्यविशिष्टः), Small धूमकेतुः (1.5 तः 3 कि.मि. दैर्घ्यविशिष्टः), Medium धूमकेतुः (3 तः 6 कि.मि. दैर्घ्यविशिष्टः), Big धूमकेतुः (10 तः 50 कि.मि. दैर्घ्यविशिष्टः), Giant Kite धूमकेतुः, Goliath धूमकेतुः (50 कि.मि. तः अधिकदैर्घ्य विशिष्टः) च।

**सन्दर्भाः -**


1. बृहत्संहिता, केतुचाराध्यायः, श्लो. 2-3
2. शब्दकल्पद्रुमः
3. सिद्धान्ततत्त्वविवेकः, मध्यमाधिकारः, श्लो. 202
4. अ. वे. सं. 19.9
5. अद्भूतसागरः, केत्वद्भुतावर्तः
6. तत्रैव
7. तत्रैव
8. बृहत्संहिता, केतुचाराध्यायः, श्लो. 41
9. वशिष्ठसंहिता, उत्पाताध्यायः, श्लो. 12
10. नारदसंहिता, अ.-2, श्लो. 129
11. बृहत्संहिता, केतुचाराध्यायः, श्लो. 2
12 बृहत्संहिता, केतुचाराध्यायः, श्लो. 7
13. हरिवंशपुराणम्, कंसवधनिमित्ताध्यायः
14. अद्भुतसागर, केत्वद्भुतावर्तः
15. तत्रैव
16. ब्रह्माण्डपुराणम्,- 1,24,169
17. ऋग्वेदः,-5-11-3



*आचार्या, ज्योतिषविद्याशाखा*

*केन्द्रीयसंस्कृतविश्वविद्यालयः,*

*जयपुरपरिसरः, जयपुरम्*

# दत्तकस्य श्राद्धविचारः

**डॉ. अङ्कितदाधीचः**



पित्रुद्देशेन श्रद्धया दीयते तत् श्राद्धं, न तु श्रद्धामात्रेण दीयते तत् श्राद्धं दानादिष्वपि श्रद्धासम्भवात्। यथोक्तं विज्ञानेश्वरेण -

**''श्राद्धं नाम अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः।[1]''**

तथैव श्राद्धविवेककारेणापि उक्तं -

**''श्राद्धं नाम वेदबोधित-पात्रालम्भनपूर्वकप्रमीतपित्रादिदेवतोद्देशको द्रव्यत्यागविशेषः''[2]**

तच्च श्राद्धं पञ्चविधं प्रोक्तम् -

**''नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च।**
**पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम्।।[3]''**

विज्ञानेश्वरेण मिताक्षरायां श्राद्धमिदमादौ द्विविधं प्रोक्तम् पार्वणम् एकोद्दिष्टं चेति। तच्च पार्वणं त्रिपुरुषोद्देशेन क्रियमाणं श्राद्धम्। तथा च एकपुरुषोद्देशेन क्रियमाणं श्राद्धम् एकोद्दिष्टम्। पुनः तत्रैव विज्ञानेश्वरेण अस्य श्राद्धस्य त्रैविध्यं विवेचितम् नित्यनैमित्तिककाम्यभेदात्। तत्रैव नियतनिमित्तोपाधौ च नित्यं श्राद्धम् अनियतनिमित्तोपाधौ च विहितं नैमित्तिकं श्राद्धं, तथा च फलकामनोपाधौ विहितं श्राद्धं काम्यम् भवति। एतेषां नित्यादीनां स्वरूपं भविष्यपुराणे व्यासेनोक्तम् -

**अहन्यह्नि यच्छाद्धं तन्नित्यमिति कीर्तितम्।**
**वैश्वदेव विहीनं तदृशक्तावुदकेन तु।।**
**एकोदिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।[4]**
**तदप्यदैव कर्त्तव्यमयुग्मान् भोजयेद् द्विजान्।।**
**कामायविहितं काम्यमभिप्रेतार्थसिद्धये।**
**पार्वणेन विधानेन तदप्युक्त खगाधिप।।**
**वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते।**
**सर्वं प्रदक्षिणं कार्य पूर्वाख्ये तूपवीतिना।।**
**अमावस्यां यत्क्रियते तत्पार्वणमुदाहृतम्।**
**क्रियते वा पर्वणि यत्पार्वणमिति स्थितिः।।[5]**

तेषु पूर्वोक्तेषु श्राद्धेषु दत्तकस्य औरसपुत्रस्य अविद्यमाने सति अधिकारः **''पिण्डदोऽशंहरश्चैषां पूर्वभावे परः परः''** इति याज्ञवल्क्यवचनात्। अतः पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्वगृहीतत्वेऽपि औरसे सति अनधिकारः। मृतस्य त्रिविधा क्रिया भवति- प्रथमा मध्यमा उत्तमा चेति। तत्र दाहमारभ्य आशौचान्तदिनपर्यन्ता क्रिया प्रथमा, एकादशाहादिसपिण्डान्ता क्रिया मध्यमा वर्तते। सपिण्डानन्तरं सांवत्सरिक-पार्वणाभ्युदयिक-

नित्यश्राद्धादिरूपा क्रिया उत्तमा भवति । अत्र त्रयोदशानां पुत्राणामधिकारः प्रतिपादितः । किन्तु प्रथमक्रियायां मध्यमक्रियायाञ्च विभक्तानां मध्ये ज्येष्ठस्य एव अधिकारः । यथोक्तम् -

**''अकृतत्वेऽपि कृते वापि कनिष्ठादिभिशैरसैः ।**
**यत्रकुत्राऽपि ज्येष्ठस्याधिकार: प्रेतकर्मणि।।[6]''**

एतस्माद्वचनात् पूर्वगृहीतस्य दत्तकस्यैव प्रेतकर्मणि अधिकार: ज्येष्ठत्वादिति ज्ञायते । तदनुचितं यदि और से सति दत्तके ज्येष्ठत्वं भवति तर्हि **'ज्येष्ठस्य विंशोद्धारः'** इत्यनेन दत्तकस्यैव समग्रे धनेऽधिकारः, तथा च **'चतुर्थांशहरा: दत्तकादयः'** वचनमिदं निरर्थक स्यात् । अत: धर्मशास्त्रकारैः दत्तकग्रहणानन्तरं समुत्पन्ने औरसे दत्तकादिषु नास्ति ज्येष्ठत्वमिति प्रतिपादितम् ।
यथा देवलेनोक्तम् -

**''औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते।''[7]**

अत्र ज्येष्ठत्वप्रतिषेधात् प्रेतकर्मणि अनधिकारोऽपि ज्ञातव्य: दत्तकस्य । पुन: प्रश्नमुपस्थापयति चन्द्रिकाकार: यत् औरसे विद्यमाने सति दत्तकस्य अनधिकार: तर्हि स: दत्तक: और्ध्वदेहिकादिषु समग्रेषु श्राद्धेषु अनधिकारी स्यात्। तथा नास्ति, विषयेऽस्मिन् अस्य प्रसङ्गस्य निराकरणाय चन्द्रिकाकार: स्वयमेव वचनमुपस्थापयति -

**''औरसक्षेत्रजौ पुत्रो विधिना पार्वणेन तु।**
**प्रत्यब्दमितरे कुयुरेकोद्दिष्टं सुता दश।।''[8]**

अस्मिन्नेव विषये दत्तकचन्द्रिकाया: टीकाकारेण शङ्करशास्त्रिणा कानिचन वचनानि उपस्थापितानि वर्तन्ते-

**''अर्वाक् संवत्सराज्येष्ठः श्राद्धं कुर्यात्समेत्य च ।**
**ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक्पृथक् ।।''[9]**

अनेन वचनेन ज्ञायते यत् सपिण्डीकरणान्तानि यानि षोडशश्राद्धानि प्रतिपादितानि वर्तन्ते, तानि पृथग्द्रव्याणि भ्रातरः सुताः वा पृथग् नैव कुर्युः । अत: सपिण्डीकरणान्तषोडशश्राद्धेषु एव दत्तकोऽनधिकारी भवति, अन्यत्र तु सपिण्डीकरणान्तषोडशश्राद्धाद् अन्येषु सांवत्सरिकादिषु श्राद्धेषु औरसदत्तको समानाधिकारिणौ स्तः । एषा व्यवस्था विभक्तेभ्य: प्रयुज्यते न तु अविभक्तेभ्यः । यतोहि उक्तं वर्तते अविभक्तेन दत्तकेन सांवत्सरिकादिकं पृथक् नैव कर्त्तव्यं, औरसकृतेनैव दत्तकस्य तच्छ्राद्धसिद्धिः भवतीति । यथोक्तम् -

**''एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ।''[10]**

पितुः क्षयाहश्राद्धं दत्तक: एकोद्दिष्टविधिना कुर्यात् । तथा च औरसक्षेत्रजौ द्वौ सांवत्सरिकं मृततिथौ च क्रियमाणं श्राद्धं स्वगृह्योक्तविधिना पार्वणेन कुर्याताम् । यथा पाराशरेनोक्तम् -

**''पितुर्गतस्य देवत्वं तत्सुतस्य त्रिपौरुषम् ।**
**सर्वत्रानेक गोत्राणामेकोदिष्टं क्षयेऽहनि ।।''[11]**

तथैव निर्णयसिन्धौ कमलाकरभट्टेन मृताहे तु एकमुद्दिश्य श्राद्धं कर्तव्यमिति प्रतिपाद्य श्राद्धमिदम् आचारपरकम् इति प्रतिपादितम् । अनेन ज्ञायते सिद्धान्तोऽयं सर्वजनै: नैव समादरणीयः । अत: औरसक्षेत्रजयोः मृताहे यत् पार्वणविधानमुक्तं तद् साग्निकविषयकमिति बोद्धव्यम् **''पार्वणेन विधानेन देयमग्निमतासदेति**

**जाबालिवचनात्''** । साग्निकस्य पार्वणविधानात् निरग्निकस्य मृताहश्राद्धम् एकोद्दिष्टविधिना कार्यम् । दत्तकादिपुत्रेषु एतादृशी व्यवस्था नैव प्रतिपादिता वर्तते । अतः दत्तकादीनां तु निरग्निकत्वेऽग्निमत्त्वे वा एकोद्दिष्टमेव ज्ञातव्यम् । एतदपि न मन्यन्ते केचन आचार्याः । ते वदन्ति यत् -

**''आपाद्य सपिण्डत्वमौरसो विधिवत्सुतः।**
**कुर्वीत दर्शवच्छाद्धं मातापित्रोः क्षयेऽहनि ।।**
**सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।**
**प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः।।''**[12]

श्राद्धेऽस्मिन् कानिचन विरोधप्रतिपादितानि वचनानि समुपलभ्यन्ते । तत्र स्मृत्यन्तरे प्रतिपादितं वर्तते यत् सपिण्डीकरणानन्तरं प्रत्यब्दं मृताहश्राद्धम् एकोद्दिष्टविधिना करणीयम् । तत्रैव व्यासेनोक्तं यः एकोद्दिष्टविधिं वर्जयित्वा पार्वणविधिना मृताहश्राद्धं करोति तस्य तत्कृतं श्राद्धमकृतमेव भवतीति । अत्रोपस्थापितात् वचनात् यदुक्तं पूर्वं तत् नैव समीचीनम् । परम् एतस्य निराकरणाय शङ्करशास्त्रिणा उक्तं पार्वणविधानं यत् विहितं तत् सांवत्सरिकश्राद्धपरकं वर्तते । तथा च 'पार्वणविधानेन देयम् अग्निमता सदा' इत्यनेन वचनेन अग्निमान् पुत्रः पार्वणविधिना श्राद्धं कुर्यात् । तदपि नैव समीचीनं यथोक्तम् -

**''बह्वग्नयस्तु विप्रा ये चैकाग्नय एव च ।**
**तेषां सपिण्डनादूर्ध्वमेकोदिष्टं न पार्वणम् ।।''**[13]

अनेन वचनेन सपिण्डीकरणानन्तरम् एकोद्दिष्टमेव कर्तव्यं न तु पार्वणमिति ज्ञायते । पुनः अमावस्यायां क्षयाहे, प्रेतपक्षे च पार्वणमेव कर्त्तव्यमिति स्मृत्यन्तरे वचनमुपलभ्यते ।

विषयेऽस्मिन् चन्द्रिकाकारेणोक्तम् एतादृश्यां स्थितौ व्रीहियववद् विकल्पो ज्ञेयः । तथा च निर्णयसिन्धौ एतस्य प्रमाणभूतं वचनं प्राप्यते -

**''मृताहे त्वेकमुद्दिश्य कुर्युः श्राद्धं यथाविधि।''**

प्रकृतस्य शुद्धदत्तकस्य जनककुले अधिकारो न भवति मनुवचनात् , तदपि अनुचितं यतोहि पुत्रदानानन्तरम् अन्यः पुत्रः नैव विद्यते तर्हि तस्य अधिकारो भवति । पुत्रान्तरस्य विद्यमाने सति तस्य अनधिकारः ज्ञातव्यः, यतोहि सर्वेषाम् एकधर्माणाम् इत्यनेन बौधायनेन प्रवराध्याये दत्तकस्य वैशिष्ट्यं प्रतिपाद्य जनकस्य प्रतिग्रहीतुश्च श्राद्धकर्तव्यता प्रतिपादिता।

द्व्यामुष्यायणपुत्रे तु 'आवयोः अयमौरसः' इति सङ्कल्पबलात् उभयत्राधिकारः । द्व्यामुष्यायणपुत्रे जनकनिरूपितम् औरसत्वं, जनकनिरूपितं गोत्रत्वं भवति तथैव पालकनिरूपितगोत्रत्वमपि भवति । अतः द्व्यामुष्यायणाख्यः क्षयाहे पार्वणश्राद्धं कुर्यात् । तथा च द्व्यामुष्यायणः जनकपालकयोः द्वे श्राद्धे कुर्यात् । द्वयोः पार्वणश्राद्धं कुर्यात् वा श्राद्धे द्वयोः पृथक् निर्देशं कृत्वा द्वौ पिण्डौ दद्यात् । तत्र यदि ग्रहीता प्रथमे मृतः जनकस्तु जीवति तदा द्व्यामुष्यायणः पालकपितुः श्राद्धं कुर्यात् । तथा च जनकः आदौ मृतः तर्हि जनकस्य श्राद्धं कुर्यात् । यदि उभौ अपि जनकपालकपितरौ मृतौ तदादौ जनकपितुः तदनन्तरं पालकपितुः श्राद्ध कर्त्तव्यम् ।
यथोक्तम् -

**''सगोत्रादन्यगोत्राद्वा यो भवेतद्विधवासुतः ।**
**पिण्डं श्राद्धविधानं च क्षेत्रिणे प्राक्प्रदापयेत् ।।**
**बीजीने तु ततः पश्चाक्षेत्री जीवति चेत्क्कचित् ।**
**बीजिने दद्युरादौ तु मृते पश्चात्प्रदीयते ।।**
**उभौ यदि मृतौ स्यातां बीजिन्यादौ ततो ददेत् ।**
**क्षेत्रिण्यादौ न दत्तं स्याद्बिजीने नोपतिष्ठते।।''[14]**

अनेनैव प्रकारेण मातृभेदेऽपि द्वयामुष्यायणः जननीपितृणां मातामहादीनामादौ श्राद्धं कुर्यात् । तदनन्तरं प्रतिग्रहीत्री या माता तत्पितॄणां श्राद्धं कुर्यात् । परन्तु शुद्धदत्तकप्रसङ्गे तु सः शुद्धदत्तकः प्रतिग्रहीत्री या माता तत्पितॄणामेव श्राद्धं कुर्यात् न तु जननीपितॄणां, यद्यपि शुद्धदत्तकस्य जनकपितुः पुत्राभावे श्राद्धेऽधिकारोऽस्ति तथापि नास्ति जनककुलीयमातामहश्राद्धाधिकारः प्रमाणाभावात् ।

**सन्दर्भाः-**

1. याज्ञ.स्मृ., पृ.260 (कमलनयन शर्मा)
2. श्राद्धविवेकः, पृ- 1
3. श्राद्धविवेकः, पृ- 1
4. अत्र नैमित्तिकपदेन षोडशप्रेतश्राद्धान्यापि संगृह्यन्ते ।
5. श्राद्धविवेकः, पृ- 2
6. श्राद्धविवेकः, पृ-2
7. दत्तकचन्द्रिका, पृ- 122 3
8. दत्तकचन्द्रिका, पृ- 122
9. दत्तकचन्द्रिका, पृ- 124
10. दत्तकचन्द्रिका, पृ- 129
11. दत्तकचन्द्रिका, पृ- 130
12. दत्तकचन्द्रिका, पृ- 132
13. दत्तकचन्द्रिका, पृ- 133
14. दत्तकचन्द्रिका, पृ-149

**सन्दर्भग्रन्थः**


1. दत्तकचन्द्रिका, डॉ.कमलनयन शर्मा, जगदीश संस्कृत पुस्तकालय,जयपुर 2008
2.. मनुस्मृतिः, पं.हरगोविन्द शास्त्री, चौखम्बा संस्कृत भवन, वाराणसी, 2015
3.. याज्ञवल्क्यस्मृतिः, गङ्गासागरराय, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, 1999
4. श्राद्धविवेक, रुद्रधर, epustkalaya.com.



*सहायकाचार्यः, धर्मशास्त्रविद्याशाखा*

*केन्द्रीयसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः, जयपुरम्*

# लकारादेशार्थविमर्शः

डॉ. किरण खींची



**शोधपत्रसारः**- पाणिनिव्याकरणदृष्ट्या लट्-लिट्-लुट्-लृट्-लेट्-लोट्-लङ्-लिङ्-लृङ्-भेदेन दशलकाराः भवन्ति। एषु पञ्चमो लेट्लकारः छन्दोमात्रगोचरः, अतः वैदिकप्रयोगार्हः। अन्ये सर्वेऽपि लौकिकाः लोकप्रयोगार्हाः भवन्ति। एषु लडादयः टितः षट्, लङादयश्च ङितः चत्वारस्सन्ति। तत्र ङिल्लकारेष्वपि लिङ्लकारः विधिनिमन्त्रणादिषु आशिषि च प्रयुक्तत्वात् विधिलिङ्-आशीर्लिङ् इति भेदेन विभज्यते।नागेशानुसारं लकारार्थाः- ''सङ्ख्याविशेष-कालविशेष-कारकविशेष-भावाः लादेशमात्रस्यार्थाः'' इति। अर्थात् एकत्वद्वित्वादिसंख्याविशेषः, वर्तमान-भूत-भविष्यदिति कालविशेषः, कर्तृ-कर्मेति कारकविशेषः भावविशेषश्च लादेशमात्रस्य तिङ्मात्रस्य सामान्यार्थो भवति। तथाहि - लडादेशस्य तिङः वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणी, तिङ्शबिति उभयसमभिव्याहारे एकत्वादिसंख्या चार्थ इति।

लकाराणां तिङादिषु शक्तिं निरूप्य प्रत्येकं लडादिदशलकाराणामर्थं निरूपयितुं कौण्डभट्टः कारिकाद्वयमुपस्थापयति[1] -

**वर्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः।।**
**ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः।**
**सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः।। इति।**

तत्र आदिम उक्तः लट्लकारस्य अर्थः वर्तमान इति। ''वर्तमाने लट्[2]'' इति पाणिनीसूत्राच्च वर्तमानार्थः ज्ञायते। **लिड्लकारः** परोक्षेऽर्थे भवतीति प्रथमकारिकांशेन ज्ञायते, ''परोक्षे लिट्[3]'' इति सूत्राच्च। **लुडर्थः** 'श्वो भाविनीति' प्रथमकारिकांशेन अनागते अह्नि भाविनि अर्थे लुट्लकारः ज्ञेयः। ''अनद्यतने लुट्[4]'' इति सूत्राच्च। **लृडर्थः** - भविष्यतीति प्रथमकारिकांशेन भविष्यत्सामान्येऽर्थे लृड्लकारः भवतीति ज्ञायते। 'लृट् शेषे च[5]' इति सूत्रस्यापि तदेवाभिप्रायः।

**लेडर्थः** - विध्यादाविति प्रथमकारिकांशेन विध्यादिरर्थः लेटः। ''लिङर्थे लेट्[6]'' इति सूत्राच्च ज्ञायते। विध्यादिः लिङर्थः ''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[7]'' इति सूत्रात् लभ्यते। तेषु विध्यादिषु अर्थेषु लेट्लकारो भवति। **लोडर्थः** ''विध्यादौ प्रार्थनादौ'' इति प्रथमकारिकांशेन लोडर्थः ज्ञायते। वस्तुतः विधिनिमन्त्रणेति सूत्रानन्तरं ''लोट् च[8]'' इति सूत्रं विद्यते।

**लङर्थः** - लङर्थस्तु ''ह्यो भूते'' इति द्वितीयकारिकांशेन ज्ञायते। ''अनद्यतने लङ्[9]'' इति सूत्राच्च अनद्यतनभूतार्थः बोध्यते। अतः अद्यतनभिन्नभूतेऽर्थे लङ्लकारः इति।

**लिङर्थः** - प्रेरणादाविति द्वितीयकारिकांशेन लिङर्थ अवबुध्यते। ''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[10]'' इति सूत्राच्च विध्यादयः लिङर्थाः इति। **लुङर्थः** - लुङः 'भूतमात्रे' इति द्वितीयकारिकांशेन अर्थः उच्यते। भूतसामान्ये लुङ् इत्यर्थः अवगन्तव्यः। 'भूते' इत्यधिकारे 'लुङ्' इति सूत्रात्।

**लृङर्थः -** लृङर्थः 'सत्यां क्रियातिपत्ताविति' द्वितीयकारिकोत्तरार्धभागेन उच्यते। 'हेतुहेतुमतोर्लिङ्' इति सूत्रनिर्दिष्टं हेतुहेतुमद्भावादिलिङ्निमित्तं भवति, तस्मिन् लिङ्निमित्ते सति अनिष्पन्नक्रियायां गम्यमानायां सत्यां भूते भाविनि च विवक्षिते कार्यकारणभावापन्नयोः क्रिययोः ''लिङ्निमित्ते लृङ् क्रियातिपत्तौ[11]'' इति सूत्रात् लृङ् भवति।

**प्रस्तावना-** संस्कृतस्य सम्यकप्रयोगो लकारज्ञानपूर्वकमेव भवितुमर्हति। विना लकारज्ञानं न तु संस्कृतसम्भाषणं युज्यते न च संस्कृतग्रन्थाध्ययनमेव। पाणिनिव्याकरणदृष्ट्या लट्-लिट्-लुट्-लृट्-लेट्-लोट्-लङ्-लिङ्-लृङ्-भेदेन दशलकाराः भवन्ति। एषु पञ्चमो लेट्लकारः छन्दोमात्रगोचरः, अतः वैदिकप्रयोगार्हः। अन्ये सर्वेऽपि लौकिकाः लोकप्रयोगार्हाः भवन्ति। एषु लडादयः टितः षट्, लङादयश्च ङितः चत्वारस्सन्ति। तत्र ङिल्लकारेष्वपि लिङ्लकारः विधिनिमन्त्रणादिषु आशिषि च प्रयुक्तत्वात् विधिलिङ्-आशीर्लिङ् इति भेदेन विभज्यते।

भगवता पाणिनिना अष्टाध्याय्याः तृतीयाध्याये लकार-लकारार्थसम्बद्धसूत्राणामुपदेशः कृतः। तत्र ''लः कर्मणि च भावे चाऽकर्मकेभ्यः[12] इति लकारशक्तिबोधकसूत्रद्वारा लकाराः कर्तरि कर्मणि भावे च भवन्तीति प्रतिपादितम्। तत्रापि, सकर्मकेभ्यः धातुभ्यः कर्तरि कर्मणि, अकर्मकेभ्यश्च धातुभ्यः कर्तरि भावे च लकाराः भवन्ति इति ज्ञायते।

लकाराणां सम्बन्धः क्रियया सह भवति यतोहि ''वर्तमाने लट्[13]'' इत्यादीनि सर्वाणि लकारविधायकानि सूत्राणि ''धातोः[14]'' इति सूत्रनिर्दिष्टधात्वधिकारे पठितानि सन्ति। येन सूत्रेण यस्य लकारस्य विधानं क्रियते तेनैव सूत्रेण तस्य लकारस्यार्थो ज्ञातुं शक्यते सामान्यतः।

''उच्चारितः शब्दः प्रत्यायको नानुच्चारितः'' इति भाष्यकथनात् लौकिकानुभवाच्च उच्चारितशब्दस्यैव अर्थप्रत्यायकत्वमर्थबोधकत्वञ्च स्वीकृत्य लकारस्थाने विहितानां तिङामेवार्थविचारः अत्र तर्कसङ्गतः प्रतीयते। शास्त्रप्रक्रियानिर्वाहाय स्थानित्वेन कल्पिते लकारे तिबादिनिष्ठबोधजनकतां शक्तिञ्च प्रकल्प्य लकाराणां विधानं सङ्गच्छते। किञ्च, लकारस्य प्रयोगघटकतयाऽनुच्चारितत्वेन तिबादीनामेव उच्चारितत्वेन च तिबादिशक्तिबोधने एव सूत्रतात्पर्यमिति बोध्यम्। नागेशानुसारन्तु ''सङ्ख्याविशेष-कालविशेष-कारकविशेष-भावाः लादेशमात्रस्यार्थाः'' इति। अर्थात् एकत्वद्वित्वादिसंख्याविशेषः, वर्तमान-भूत-भविष्यदिति कालविशेषः, कर्तृ-कर्मेति कारकविशेषः भावविशेषश्च लादेशमात्रस्य तिङ्मात्रस्य सामान्यार्थो भवति। तथाहि - लडादेशस्य तिङः वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणी, तिङ्शबिति उभयसमभिव्याहारे एकत्वादिसंख्या चार्थ इति।

तदुक्तं कौण्डभट्टेन[15] -

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्।। इति।**

फलव्यापारौ इति धातोरर्थौ स्तः, तत्र फले तङ्यक्चिणादयः फलाश्रयान्वयं तिङर्थस्य कर्मणः अन्वयं द्योतयन्ति बोधयन्तीति। व्यापारे च शप्श्नमादयः व्यापाराश्रयान्वयम् अर्थात् तिङर्थस्य कर्तुः अन्वयं बोधयन्ति इति कारिकासामान्यावबोधः। तत्र तिङ्समभिव्याहारे तिङ अर्थ एकत्वादिसंख्या, तस्यैव तिङः कर्तृकर्मादिकारकं विशेषणं भवति। किञ्च कालस्तु धात्वर्थभूतव्यापारे विशेषणं भवति। यथाह्युक्तं कौण्डभट्टेन[16] -

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।**

फलव्यापारयोरर्थयोः धातुशक्तिः, अतः फलव्यापारनिरूपितवाचकतावान् धातुः इत्यभिधीयते। आश्रये (फलाश्रये कर्मणि, व्यापाराश्रये कर्तरि अर्थे) तु तिङः स्मृताः अर्थात् आश्रयनिरूपितवाचकतावन्तश्च तिङः स्मृताः। फलापेक्षया व्यापारः प्रधानम्। एवमेव तिङर्थाः (कर्तृ-कर्म-संख्या-काल-भावादयः) अपि व्यापारे विशेषणतया प्रतीयन्ते इति बोध्यम्। तिङर्थः कर्ता व्यापारे, तिङर्थः कर्म च फले विशेषणं भवति। तिङर्थसंख्या कर्तृप्रत्ययसमभिव्याहारे कर्तरि, कर्मप्रत्ययसमभिव्याहारे च कर्मणि विशेषणम्। ''भावप्रधानमाख्यातम्'' इति यास्कवचनात् क्रियाप्राधान्यबोधकं ''भूवादयो धातवः'' इति सूत्रस्थभाष्याच्च क्रियापदं क्रियते यया सा क्रियेति करणव्युत्पत्त्या व्यापारपरं, क्रियते या सा क्रियेति कर्मव्युत्पत्त्या फलपरं भवति। एवञ्च सर्वत्र व्यापारस्यैव प्राधान्यम्। एतेन नागेशमते कर्तृप्रत्ययसमभिव्याहारे व्यापारमुख्यविशेष्यकबोधः, कर्मप्रत्ययसमभिव्याहारे च फलमुख्यविशेष्यकबोधो ज्ञायते। एवं नागेशमते फलव्यापारयोः द्वयोरपि लक्ष्यानुसारं मुख्यविशेषतासिद्धौ ''चैत्रः ग्रामं गच्छति'' इत्यत्र ग्रामाभिन्न-चैत्राभिन्नाश्रयको वर्तमानकालिको व्यापारः इति व्यापारमुख्यविशेष्यकशाब्दबोधो भवति। ''मैत्रेण ग्रामः गम्यते'' इत्यत्र मैत्राश्रयकोवर्तमानकालिकव्यापारजन्यग्रामाऽभिन्नकर्मनिष्ठसंयोगानुकूलो व्यापार इति फलमुख्यविशेष्यकशाब्दबोध उच्यते।

लकाराणां तिङादिषु शक्तिं निरूप्य प्रत्येकं लडादिदशलकाराणामर्थं निरूपयितुं कौण्डभट्टः कारिकाद्वयमुपस्थापयति[17] -

**वर्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः।।**
**ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः।**
**सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः।। इति।**

एतयोः कारिकयोः क्रमेण लडादीनां दशलकाराणां पाणिनिविहितस्यार्थस्य सङ्केतरूपेणोल्लेखमात्रं विद्यते। तत्र आदिम उक्तः **लट्लकारस्य** अर्थः वर्तमान इति। ''वर्तमाने लट्[18]'' इति पाणिनीसूत्राच्च वर्तमानार्थः ज्ञायते। वर्तमानत्वलक्षणमुक्तं कौण्डभट्टेन - ''प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्'' इति। तत्रैव नागेशमतमस्ति - ''वर्तमानकालत्वं प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्'' इति। वस्तुतः प्रारब्धा अपरिसमाप्ता च या क्रिया, तादृशक्रियोपलक्षितकालत्वं वर्तमानत्वम्। अर्थात् तद्तद्- धातुवाच्याऽद्यक्रियामादाय चरमक्रियापर्यन्ताधिकरणीभूतः कालो वर्तमानत्वेन व्यवह्रियते पचति-गच्छतीत्यादिप्रयोगदर्शनात्। यथाहि पचतीत्यत्र तण्डुलस्थाल्यादेः पात्रस्य चुल्ल्युपरिस्थापनात्-प्रभृति अधःश्रयणान्तं ततो नीचैः स्थापनं यावद् मध्ये तद्-वर्तमानत्वमस्ति, तत्रार्थे लट्प्रयोगो भवति। एवम् अधिश्रयणादिरधःश्रयणपर्यन्त ओदनफलावच्छिन्नो व्यापारसमूहः पच्धातोरर्थः। 'आत्माऽस्ति', 'पर्वताः सन्ति' इत्यादौ भूत-भविष्यद्-वर्तमानकालिकानां राज्ञां क्रियायाः तिष्ठतेरधिकरणम् इति भाष्यात्, तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात् तादृशाऽनित्यत्वविशिष्टोत्पत्त्यादिकमादाय तेषां वर्तमानत्वादिकल्पनेन वर्तमानादिकालत्वं सङ्गच्छते। लडादिप्रत्ययमाध्यमेन वर्तमानत्वादि द्योत्यते, क्रियासामान्यवाचकस्य वर्तमानत्वादिविशिष्टक्रियायां लक्षणायां लडादेस्तत्तदर्थतात्पर्यग्राहकत्वेन उपयोगात्।

**लिड्लकारः** परोक्षेऽर्थे भवतीति प्रथमकारिकांशेन ज्ञायते, ''परोक्षे लिट्[19]'' इति सूत्राच्च। कालस्तावद्

द्विविध अद्यतनऽनद्यतनभेदात्। द्विविधोऽपि भूताद्यतन-भविष्यदद्यतनेति भूतानद्यतन-भविष्यदनद्यतनेति च। तत्रानद्यतने भूते परोक्षेऽर्थे लिडित्यर्थः सङ्गच्छते। अद्यतने भूते, अनद्यतने भविष्यति, अद्यतने भविष्यति च न लिट्प्रयोगः। भूतेऽपि अपरोक्षे न लिट्प्रयोगः। परोक्षत्वञ्च 'साक्षात्करोमि' इत्येतादृशविषयताशालिज्ञानाऽविषयत्वमिति बोध्यम्। भूतानद्यतनत्वञ्च अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वम् इति नागेशमतम्। परोक्षत्वञ्चेदं कर्तृकर्मेति कारके विशेषणम्, न तु क्रियायाम्, तस्या अतीन्द्रियत्वेन ''परोक्षे लिट्'' इति सूत्रे भाष्ये प्रतिपादनात् व्यभिचाराऽभावात्, मूर्तभूतायाः प्रदर्शयितुमशक्यत्वेपि अवयवशः पचतीत्यादौ फूत्काराधःसन्तापनादीनां प्रत्येकमवयवभूतक्रियायाः 'साक्षात्करोमि' इति प्रतीतिविषयत्वात्। अन्यथा 'पश्य मृगो धावति' इत्यादौ तस्याः उत्कटधावनक्रियाविशेषभूतायाः दर्शनक्रियायाः कर्मता न स्यादिति।

**लुडर्थः** 'श्वो भाविनीति' प्रथमकारिकांशेन अनागते अह्नि भाविनि अर्थे लुट्लकारः ज्ञेयः। ''अनद्यतने लुट्[20]'' इति सूत्राच्च। उदाहरति - 'श्वो भविता' इत्यादौ अनागते अह्नि अव्यवहितपरदिने लुट्लकारस्य प्रयोगः। श्वः इति पदं क्रियायाः अद्यतनभिन्नकालिकत्वं सूचयति। एवमेव नागेशमते भविष्यदनद्यतनार्थोऽधिकः लुटः। अत्रापि लङ्वत् संख्याकारकं (एकत्वादिसंख्या कर्तृकर्मादिकारकं) भवति। भविष्यत्वस्य लक्षणम् - वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम् अर्थात् यस्याः क्रियायाः प्रागभावः वर्तमानः तत्क्रियायाः अधिकरणकालः भविष्यत्।

**लृडर्थः** - भविष्यतीति प्रथमकारिकांशेन भविष्यत्सामान्येऽर्थे लृड्लकारः भवतीति ज्ञायते। 'लृट् शेषे च'[21] इति सूत्रस्यापि तदेवाभिप्रायः। भविष्यत् सामान्यमिति अद्यतनानद्यतनसाधारणमित्यर्थः। किन्तु अद्यतनत्वविवक्षायां लुटा बाधात् न लृट्। अतः अनद्यतनभविष्यदर्थः लृटः। भूषणानुसारं तु - वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वं भविष्यत्त्वम्। अतः प्रागभावप्रतियोगिसमयोत्पत्तिमान् भविष्यत्कालो भवति। यद्यपि कालः नित्यः तस्य प्रागभावप्रतियोगित्वं नास्ति तथापि उपाधिविशिष्टस्य तस्य कालस्य प्रागभावादिप्रतियोगित्वं स्वीकर्तव्यं भवति, तदैव व्यवहारे भूतभविष्यद्वर्तमानकालिकप्रयोगाः सम्भवन्ति। उदाहरणं हि ''घटो भविष्यति'' इत्यत्र वर्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलो घटाश्रयको व्यापारः इति बोधो जायते।

**लेडर्थः** - विध्यादाविति प्रथमकारिकांशेन विध्यादिरर्थः लेटः। ''लिङर्थे लेट्[22]'' इति सूत्राच्च ज्ञायते। विध्यादिः लिङर्थः ''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[23]'' इति सूत्रात् लभ्यते। तेषु विध्यादिषु अर्थेषु लेट्लकारो भवति। लट्प्रक्रियातो ''लेटोऽडाटौ[24]'' इति विशेषः 'भवति- भवाति' इति प्रयोगदर्शनात्।

**लोडर्थः** - ''विध्यादौ प्रार्थनादौ'' इति प्रथमकारिकांशेन लोडर्थः ज्ञायते। वस्तुतः विधिनिमन्त्रणेति सूत्रानन्तरं ''लोट् च[25]'' इति सूत्रं विद्यते। अतः पूर्वसूत्रात् विधिनिमन्त्रणाद्यर्थाः अनुवर्तन्ते। कारिकायां प्रार्थनादौ इत्युक्त्या आदिना आशिषि अपि लोड्विधानं सूच्यते 'लोट् च', 'आशिषि लिङ्लोटौ[26]' इति सूत्राभ्यामपि ज्ञायते। यथा आशिषि अर्थे लोटः उदाहरणम् - ''भवतु ते शिवप्रसादः'' इति। अत्र हितविषयकमदिच्छाविषयत्वसम्बन्धि-शिवप्रसादकर्तृकं भवनमिति बोधो भवति। एवं विध्यादिषु अन्येष्वपि अर्थेषु लोट्प्रयोगः दृश्यते।

**लङर्थः** - लङर्थस्तु ''ह्यो भूते'' इति द्वितीयकारिकांशेन ज्ञायते। ''अनद्यतने लङ्[27]'' इति सूत्राच्च अनद्यतनभूतार्थः बोध्यते। अतः अद्यतनभिन्नभूतेऽर्थे लङ्लकारः इति। नागेशानुसारन्तु लङादेशस्य

भूतानद्यतनत्वमधिकोऽर्थः। शेषं संख्याकारकश्च लङ्वत् भवति। उदाहरणं हि ''अस्य पुत्रोऽभवत्'' इति। अत्र सन्निकृष्टव्यक्तिनिष्ठजनकतानिरूपितजन्यतावत्-पुत्रनिष्ठानद्यतनभूतकालवृत्त्युत्पत्त्यनुकूलो व्यापार इति व्यापारमुख्यविशेष्यताकः शाब्दबोधः।

**लिङर्थः** - प्रेरणादाविति द्वितीयकारिकांशेन लिङर्थ अवबुध्यते। ''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[28]'' इति सूत्राच्च विध्यादयः लिङर्थाः इति। तत्र विधिः प्रेरणम्, भृत्यादेः निकृष्टस्य प्रवर्तनम्। निमन्त्रणं नियोगकरणम्, आवश्यकप्रेरणेत्यर्थः। आमन्त्रणं कामचारानुज्ञा, यथेष्टं कर्तुं स्वातन्त्र्यम्। अधीष्टः सत्कारपूर्वको व्यापारः, सम्प्रश्नः संप्रधारणमनुमतिर्वा। अत्र विध्यादि-अधीष्ट-पर्यन्तचतुष्टयस्य प्रवर्तनायामनुगतत्वेन 'प्रवर्तनासम्प्रश्नप्रार्थने लिङ्'' इति सुवचं लाघवात्। भर्तृहरिणाऽपि तथैव समर्थितम् -

**अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।**
**तत्रैव लिङ्विधातव्यं किं भेदस्य विवक्षया।।**
**न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।**
**विध्यादीनामुपादानं चतुर्णामादितः कृतम्।। इति।।**

किन्नाम प्रवर्तनात्वमिति जिज्ञासायामुच्यते - प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तच्च इष्टसाधनत्वस्यास्तीति तदेव लिङर्थः। नैयायिकाभिमतकृतिसाध्यत्वं तु न लिङर्थः वैयाकरणसम्मतम् कृतिसाध्यत्वस्य यागादौ लोकत एव लाभात्, अन्यलभ्यत्वात्। 'अनन्यलभ्यो हि शब्दार्थः' इति नियमः। न च बलवदनिष्टाननुबन्धित्वं लिङर्थः युज्यते द्वेषाऽभावेन अन्यथासिद्धत्वात्। एवम् आस्तिककामुकस्य नरकसाधनताज्ञानदशायामपि उत्कटेच्छया द्वेषाऽभावदशायां प्रवृत्तेः व्यभिचाराच्च। अतः तस्मादिष्टसाधनत्वमेव प्रवर्तना। प्रेरणादाविति द्वितीयकारिकायां पठितेन आदिना 'हेतुहेतुमतोर्लिङ्[29]'' आशिषि लिङ्लोटौ' इत्यादिसूत्रोक्ताः लिङः हेतु-हेतुमद्भावाः आशीरादयः चार्थाः गृह्यन्ते। उदाहरणं हि - 'यो ब्राह्मणायावगुरेत् तं शतेन यातयेदिति'। अत्र ब्राह्मणाय अवगुरणं शतं वर्षाणां यातनाया हेतुरिति हेतुहेतुमद्भावादिह लिङ्।

**लुङर्थः** - लुङः 'भूतमात्रे' इति द्वितीयकारिकांशेन अर्थः उच्यते। भूतसामान्ये लुङ् इत्यर्थः अवगन्तव्यः। 'भूते' इत्यधिकारे 'लुङ्' इति सूत्रात्। विद्यमानध्वंसप्रतियोगित्वमिति भूतत्वलक्षणं भूषणसारे उच्यते। तच्च भूतत्वं क्रियायामन्वेति धातोरिति अधिकारात्। अतः कर्तुः घटस्य विद्यमानत्वेऽपि तत्क्रियायाः अस्थायितया तत्र ध्वंसप्रतियोगित्वमक्षतमेवेत्यर्थः। क्रियायां भूतत्वं निर्बाधमिति हेतोः कर्तृभूते घटे विद्यमानेऽपि तदीयोत्पत्त्यनुकूलक्रियाया विनष्टत्वात् 'घटोऽभूत्' इति प्रयोगः उपपद्यते। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रय उत्पत्त्यनुकूलो व्यापार इति बोधः।

यथाप्रसङ्गं कालोऽपि अत्र विचार्यते - कालो द्विविधः, अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः - भूतभविष्यद्वर्तमानभेदात्। अन्त्यो द्विविधः - भूतो, भविष्यच्च। तत्र वर्तमाने लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायाम् अनयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्, तत्रैव परोक्षत्वविवक्षायां लिट्। तादृशे भविष्यति लुडिति। एतत्सर्वं तालिकायामेवं प्रदर्शयितुं शक्यते -




➢ यद्यपि लोट्-लिङ्-लृङ्लकाराः अपि काले अन्तर्भवन्ति तथापि अद्यतनानद्यतनसीमानमतिक्रम्य तत्तदुक्तेषु विशिष्टेष्वर्थेषु ते विधीयन्ते।

**लृङर्थः** - लृङर्थः 'सत्यां क्रियातिपत्ताविति' द्वितीयकारिकोत्तरार्धभागेन उच्यते। 'हेतुहेतुमतोर्लिङ्' इति सूत्रनिर्दिष्टं हेतुहेतुमद्भावादिलिङ्निमित्तं भवति, तस्मिन् लिङ्निमित्ते सति अनिष्पन्नक्रियायां गम्यमानायां सत्यां भूते भाविनि च विवक्षिते कार्यकारणभावापन्नयोः क्रिययोः ''लिङ्निमित्ते लृङ् क्रियातिपत्तौ[30]'' इति सूत्रात् लृङ् भवति। भविष्यदर्थस्योदाहरणं - सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् इति। अत्र सुभिक्षभवने सुवृष्टिभवनं हेतुरस्ति। एवञ्च हेतुहेतुमद्भावे क्रियाया असिद्धौ धातोः लृङ्विधानं सङ्गच्छते।

नागेशस्तु लृङः भूतत्वं क्रियातिपत्तिश्चार्थः इति स्वीकरोति। अत्र अतिपत्तिः अनिष्पत्तिः असिद्धिः, आपादनारूपा च। सा च आपादना तर्कः। तर्कत्वं च मानसत्वव्याप्यजातिविशेषः अर्थात् मनसि व्याप्तस्य विचारविशेषस्य धर्मः तर्कः। यथा निर्वह्निः स्यात् निर्धूमःस्यादिति। वह्न्यभावकल्पनया धूमाऽभावः कल्प्यते इति भावः। अग्रे, नागेशः भविष्यति क्रियापतिपादनेऽपि लृङर्थं स्वीकरोति।

**उपसंहारः-** एवंप्रकारेण सर्वेऽपि लकारार्थाः विचारिताः। किन्तु वर्तमानत्वादयो मुख्यार्थाः लडादीनामिति कृत्वा ''वर्तमाने परोक्षे'' ''ह्यो भूतेः इत्यादिभिः तेषां लडादीनामर्थाः प्रतिपादिताः। प्रसिद्धत्वात् एष्वेवार्थेषु लोके प्रयोगोऽपि दृश्यते। किन्तु वर्तमानत्वादिषु अर्थेषु शक्तिः सङ्केतरूपा, अन्यत्र पृष्टप्रतिवचनाभिज्ञावचनाद्यर्थे लक्षणेति मतान्तररीत्या बोधकत्वमेव शक्तिरिति इत्युक्तम्। वस्तुतः एतेषां लडादीनामर्थान्तरेऽपि बहुशो विधानदर्शनात् एतेषामन्येऽपि अर्थाः अत्रोल्लेखनीयाः। यथा ''लट् स्मे[31]'', ''अपरोक्षे च[32]'', ''ननौ पृष्टप्रतिवचन[33]'', ''नन्वोर्विभाषा[34]'', ''पुरि लुङ् चास्मे[35]'' इत्यादिसूत्रैः भूतार्थेऽपि लड्विधानं प्रतिपाद्यते। एवमेव अन्येषामपि लकाराणां लृडादीनां भविष्यदतिरिक्तान्यत्रापि विधानं दृश्यते - ''अभिज्ञावचने लृट्[36]'' इति। एवमेव ''प्रश्ने चासन्नकाले[37]'' इत्यनेन भूतभिन्नेऽपि लिड्विधानं दृश्यते। एवमेव अन्येषामपि प्रतिपादितम्। एतेषां लडादीनां

क्रमनिर्धारकः अ इ उ इति अनुबन्धक्रम एव ज्ञातव्यः। अत एव पञ्चमो लकारः वेदाद्यर्थविचारकैः मीमांसकैः लेट् इति व्यवह्रियते। अनुबन्धक्रमेण लेट एव पञ्चमः क्रम इति लकारार्थाः।।

**सन्दर्भाः-**


1. वैयाकरणभूषणसारः-लकारार्थनिर्णय-कारिका 22-23
2. पाणिनीयः अष्टाध्यायीसूत्रपाठः 3.2.123
3. पा. अ. सू. 3.2.115
4. पा. अ. सू. 3.3.15
5. पा. अ. सू. 3.3.13
6. पा. अ. सू. 3.4.7
7. पा. अ. सू. 3.3.169
8. पा. अ. सू. 3.3.162
9. पा. अ. सू. 3.2.111
10. पा. अ. सू. 3.3.169
11. पा. अ. सू. 3.3.139
12. पाणिनीयः अष्टाध्यायीसूत्रपाठः 3.4.69
13. पा. अ. सू. 3.2.123
14. पा. अ. सू. 3.2.91
15. वैयाकरणभूषणसारः - धात्वर्थनिर्णयः - कारिका 3
16. वैयाकरणभूषणसारः - धात्वर्थनिर्णयः - कारिका 2
17. वैयाकरणभूषणसारः - लकारार्थनिर्णयः - कारिका 22-23
18. पाणिनीयः अष्टाध्यायीसूत्रपाठः 3.2.123
19. पा. अ. सू. 3.2.115
20. पा. अ. सू. 3.3.15
21. पा. अ. सू. 3.3.13
22. पा. अ. सू. 3.4.7
23. पा. अ. सू. 3.3.169
24. पा. अ. सू. 3.4.64
25. पा. अ. सू. 3.3.162
26. पा. अ. सू. 3.3.171
27. पा. अ. सू. 3.2.111
28. पा. अ. सू. 3.3.169
29. पा. अ. सू. 3.3.156
30. पा. अ. सू. 3.3.139
31. पा. अ. सू. 3.2.118
32. पा. अ. सू. 3.2.119
33. पा. अ. सू. 3.2.120
34. पा. अ. सू. 3.2.121
35. पा. अ. सू. 3.2.122
36. पा. अ. सू. 3.2.112
37. पा. अ. सू. 3.2.117


**सहायकग्रन्थसूची -**


1. पाणिनीयः अष्टाध्यायीसूत्रपाठः - पं. ब्रह्मदत्त जिज्ञासु
2. वैयाकरणभूषणसारः - पं. कालीकान्त झा।
3. परमलघुमञ्जुषा - डॉ. जयशङ्करलाल त्रिपाठी।



*सहा. आ. (व्याकरणम्)*

*के.सं.वि. जयपुरपरीसरः*

# शिवराजविजये साम्प्रतिकसमस्यासमाधानोपायाः

डॉ. शैलेशकुमारजैमनः



शिवराजविजयस्य रचना ग्रन्थकारेण विशिष्टोद्देश्यपूर्तये कृता। प्रकृतग्रन्थे बहुषु वर्णनेषु आधुनिकसमस्यैव पुरातनकालिकसमस्याः जाताः। समस्या नास्ति चेत्तथापि ग्रन्थः नैकान् भावान् पोषयति। शिवराजविजये सामान्यकर्तव्यानां वर्णनं द्रष्टुं शक्यते। यैः वर्णनैः सर्वे जना उपदेशं गृह्णन्ति। येन केन प्रकारेण ग्रन्थात् जनाः स्वोत्तरदायित्वं, स्वधर्मं च ज्ञात्वा कर्त्तव्यपरायणाः भवेयुः, इत्येव ग्रन्थस्योद्देश्यम्।

शिवराजविजयस्य मूलभावना राष्ट्रीयभावना कथितुं शक्यते। सर्वे जनाः कर्त्तव्यनिष्ठाः सन् मातृभूमेः रक्षणमकुर्वन्, अनेन ग्रन्थकारः पाठयति यत् मातृभूमिरक्षणसमये एकतायामेव देशहितं सन्निहितम्। एकीभूय स्वसंस्कृतेः मातृभूम्याश्च रक्षणमेव परमकर्त्तव्यम्। परतन्त्रता इव कोऽपि नर्कः न भवेत्। अतः 'जीवनपर्यन्तं स्वतन्त्रतार्थं प्रयत्नं कुर्वन्तु' इति देशजनेभ्यः कवेरुपदेशः प्रतीयते ।

'राष्ट्रीयभावना एव मुख्योद्देश्यम्' किमर्थं ? इति प्रश्नो भवति । ग्रन्थकारोऽन्यग्रन्थनिर्माणेऽपि सक्षम आसीत, तर्हि किमर्थं शिवराजविजयमेव ग्रन्थः तेन रचितः ? प्रश्नोत्तरे - अम्बिकादत्तव्याससमये भारते आङ्ग्लशासनमासीत्, आङ्ग्लशासनात् पूर्वं मुगलशासनमपि भारतदेशोपरि रराज। मुगलसमयेऽपि भारतीयाः भारते एव न्यवसन्, आङ्ग्लशासनकालेऽपि अत्रैव उषित्वा परतन्त्रतामन्वभवन्। किमर्थमिदम् परतन्त्रतानुभवम् ? तस्मिन् कालिकी देशदुर्दशां दृष्ट्वा कवेः हृदयं खिन्नमभवत्, अतः जनानां मनसि राष्ट्रभावनासञ्चाराय, देशभक्तिभावनाया उन्नत्यै, एकतायै, संस्कृतिरक्षणाय, देशहिताय च ग्रन्थकारेण शिववीरस्य दशवर्षपर्यन्तं जीवनकालमवलम्ब्य राष्ट्रभावनायुक्तग्रन्थः 'शिवराजविजयम्' रचितम् ।

ग्रन्थप्रणयनस्योद्देश्य एवं कथाकथनस्य भावः सामान्यतयैव अनुमीयते, 'यद् ग्रन्थस्यावश्यकता आधुनिकयुगे भविष्यति वा न भविष्यति? परन्तु तस्मिन् समये राष्ट्रभावनायुक्तस्य ग्रन्थस्य रचनाया आवश्यकता अनिवार्यरूपेणाभवत्'।

आधुनिकयुगे अनन्योपयोगितायुक्तोऽयं ग्रन्थः, आधुनिककालस्य समस्यासमाधानोपायानां विषये चर्चाया औचित्यं तु विद्यतैव, परन्तु पुरातनकालिकसमस्यायाः समाधानञ्च उपायरूपेण ग्रन्थस्य रचनावर्णनमप्यावश्यकमेव। शिवराजविजये मुख्यतया राष्ट्रभावनासञ्चारम्, देशभक्तिजागरणमेव प्रतिपादितम्, यया भावनया परजनेभ्यः देशद्रोहिजनेभ्यश्च देशरक्षा भविष्यति। 'अम्बिकादत्तव्यासकालं भारतदेशाय समस्यायुक्तमासीत्, अतः उपायरूपेण तेन 'शिवराजविजयम्' रचितम्'। शिवराजविजयं न तु मात्रग्रन्थ एव, अपितु देशहिताय कृतः उपायः। आधुनिकयुगेऽपि एतादृशी समस्या भवति, तथा अग्रेऽपि भविष्यति एव। प्राचीनकाले भिन्न-भिन्नशासनानि देशे सर्वानप्यत्याचारानाचरयित्वा भारतीयसंस्कृतिमनश्यन्। अधुनापि एतादृशमेव आचरणं भवति, सम्पूर्णविश्वस्य ज्वलन्ता समस्या 'आतङ्कवादः' वर्तते। अस्मिन समुदाये हिंसकाः जनाः, सर्वानपि जनान् नन्ति, ताडयन्ति, शोषयन्ति च। अन्यदेशान् विहाय भारतदेशोपरि तेषामधिकारुचिः दृश्यते। पुराकाले एषैव रुचिः भारतदेशे तान् आनयत्।

बहवः वीरराजानः देशहितायकार्यमकुर्वन, परन्तु परतन्त्रतापश्चाद् । यदि प्रागेव देशहितायप्रयत्नः भविष्यति चेत् नास्ति समस्या। एकताभावेन भारतदेशे देशद्रोहिजनाः बहुवर्षं यावत् अराजन्। अस्मिन् समये भारतदेशे राजादीनां प्रथा तु विलुप्ता, अधुना लोकतन्त्रराजः । लोकतान्त्रिकदेशे एकः जनः सम्पूर्णदेशस्योत्तरदायित्त्वं निर्वहति। अस्मिन् बहवः, शक्तिसम्पन्नानिः दलानि भवन्ति । यथा - 'भारतीयजनतापार्टी', 'राष्ट्रीयकांग्रेसपार्टी', 'आमआदमीपार्टी', 'समाजवादीपार्टी' इत्यादीनि । सर्वेषु दलेषु कानिचन दलानि एव देशहितमाचरन्ति । अन्यानि दलानि देशं शोषयन्ति। सत्ताप्राप्त्यये ते जनाः विद्रोहीणां पक्षमेव गृध्यन्ति । परिणामतः देशद्रोहिणः सशक्ताः सन् प्राचीनकालवदेव बलात्काराः, मन्दिरध्वंसनम्, गोवधम्, गोमांसभक्षणम्, हिन्दूनां शोषणम्, हिन्दूवधमित्यादीनि निन्दनीयकृत्यानि अधुनापि आचरन्ति । अधुना मुख्यदलमेव भारतीयहितानाचरन्ति । भारतीयसंस्कृतिरक्षणमेवास्माकं कर्त्तव्यम् । एकीभूयसंस्कृतिरक्षणं सदैवकरणीयमिति भारतीयानां परमं कर्त्तव्यञ्च । 'ये देशसंस्कृति नश्यन्ति' तेभ्यः धर्मयुक्तरीत्या देशरक्षणं प्रत्येकभारतीयानां मुख्योद्देश्यं भवेत् । अनेन प्रकारेण अस्मिन् ग्रन्थे जातिविशेषद्वेषं नास्ति । ग्रन्थोऽयमुपदिशति यत् 'जाति-धर्म विहाय एकीभूय देशद्रोहिभ्यः देशरक्षणं कुर्वन्तु' । अत्र समुदायविशेषजनानामुल्लेखः नास्ति । केवल देशद्रोहिजनानामेव । अनेन प्रकारेण पूर्वकथनानुसारं अम्बिकादत्तव्यासकृत - 'शिवराजविजयस्य मुख्योद्देश्य राष्ट्रभावनायाः सञ्चारमेव । ग्रन्थः भेदभावं समुदायविशेषेषु द्वेषभावं न सञ्चारयति अपितु एकताया उपदेशं प्रदाय राष्ट्ररक्षणं, राष्ट्रभावना च सञ्चारयति' । अतः प्रकृतग्रन्थस्य मुख्योपयोगिता आधुनिकयुगे दृश्यते।

ग्रन्थेऽस्मिन् राष्ट्रभावनायाः उपदेशेन सह धर्मः, शिक्षा, मर्यादा, राजनीतिः, संस्कारः, संस्कृतिमहत्त्वम्, कलामहत्त्वम्, आतिथ्यभावमित्यादयः भिन्न-भिन्नविषयाः समाहिताः सन्ति । परन्तु अत्र वार्ता तादृशी एव यद् ग्रहणकर्तुः सामर्थ्य कीदृशम् ? यथा- सामर्थ्य सः ग्रहीष्यति । भारतप्रतिष्ठाविषये संस्कृते कथ्यते यत् 'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' संस्कृतं संस्कृतिश्च भारतदेशस्य प्रतिष्ठे वर्तते । कोऽपि ग्रन्थः जन्मभूमिमहत्त्वम्, संस्कृतिमहत्त्वम्, संस्कृतमहत्त्वञ्च पाठयति तर्हि तस्यावश्यकता पुरातनकाले बभूव, वर्तमानकाले भवति एवं भविष्यकाले भविष्यति एव इति निश्चितम् ।

संस्कृतिमहत्त्वं तु ग्रन्थे प्रतिपादितमेव । संस्कृताय ग्रन्थे किमपि नास्ति ? इति प्रश्ने सति, वेदकालाद् गद्यसाहित्यपरम्पराप्रचलिता जाता, परन्तु समये-समये कदा सा समृद्धा जाता कदा सा जीर्णा जाता । अस्मिन्नैव प्रवाहे समयान्तरे 'शिवराजविजयस्य' रचना जाता । अनया रचनया पाठकानां मनसि आनन्दप्राप्तिः भवत्येव, राष्ट्रभावनासञ्चारम्, देशसंस्कृतिरक्षणम्, स्वकर्तव्यबोधश्च भवन्ति, ततोऽप्यधिकं संस्कृतक्षेत्रे गद्यकाव्यपरम्परायां उपन्याससाहित्यस्य 'श्रीगणेशः' शिवराजविजयेन एव जात । हिन्दी, बांग्लेत्याद्यां भाषायां उपन्याससाहित्यं प्राप्यते, परन्तु संस्कृतभाषायां उपन्यासविभागमेव नाभवत् । शिवराजविजयेन उपन्यासविधा अपि पुष्टा जाता । संस्कृति संस्कृतयोः वर्धने शिवराजविजयस्य महदवदानं वर्तते इति तु स्पष्टमेव । अतः यदि एतादृशाः अन्याः ग्रन्थाः भविष्यन्ति व भवन्ति तर्हि भारतीयजनेभ्यः भारतदेशाय च महदुपकारकाः । संस्कृतभाषायां एतादृशाः ग्रन्थाः भविष्यन्ति चेत् धर्मस्य, नीते, संस्काराणाञ्च सिञ्चनमवश्यमेव कारयन्ति । **'धर्मो रक्षति रक्षितः[1]'** इत्यनुसारं यदि कोऽपि ग्रन्थः 'धर्मशिक्षणम्' प्रददाति चेत् अवश्यमेव तस्यावश्यकता । शास्त्राण्यपि धर्मादिसंस्कारान् एव पाठयन्ति । अनेन प्रकारेण शिवराजविजयसदृशाणां ग्रन्थानां उपयोगिता वर्तते ।

शिवराजविजयग्रन्थस्योपयोगितायां निम्नबिन्दवः सम्मिलिताः सन्ति यथा -

**पूज्यानामागमने आतिथ्यसत्कारः**

'अतिथिदेवो भव[2]' शास्त्रेषु सर्वत्र दृश्यते । मातृदेवो भव, पितृदेवो भव, इत्यादीनि वचनानि सन्ति परन्तु आधुनिकयुगे हिन्दूसभ्यतायां आतिथ्यसम्मानमित्यादयः नैके संस्काराः विलुप्ताः । शिवराजविजये संस्काराणां दर्शनं शिववीरस्य चरित्रे दृश्यते । गोपीनाथपण्डितः शिववीरपार्श्वेऽगमत् । तदा शिववीरः तस्य सम्मानमकरोत् । गोपीनाथपण्डितसाहाय्येन युद्धमजयत् । तदनन्तरं राघवाचार्यः संन्यासिवेशे शिववीरसाहाय्ये आगच्छत् । तदा संन्यासिवेशमेव दृष्ट्वा शिववीरः तस्य सम्पूर्णसम्मानमकरोत् । गुरुजनानां अतिथिजनानां वागमने उत्तिष्ठः सन् जनाः प्रणमन्ति स्म । पत्यः प्रेमिकाः वा स्वामीनामागमने अनेन प्रकारेण उत्तिष्ठन्ति स्म । ग्रन्थे केषामादरः केन प्रकारेण करणीय च इति उपदेशं मिलति । आधुनिकसमये प्रविधियुगे बहवः जनाः सभ्यतां विस्मृतवन्तः । बहुषु उच्चस्तरीय अभियान्त्रिक, विज्ञान, वाणिज्यशिक्षा, इत्यादिविषयानां विद्यालयेषु सभ्यतायाः दर्शनं न भवति । इति तु समस्या एव वर्तते । आधुनिकसमये जनाः जातिवादमाचरन्ति । पण्डितानां गुरुजनानां द्रोहं कुर्वन्ति, अतिथिजनान् न वाञ्छन्ति। एतादृशीनां सर्वासां समस्यानां मूलकारणं सभ्यतायाः संस्काराणां लोप एव । अतः शिवराजविजय सदृशाः ग्रन्थाः सभ्यतां पाठयन्ति ।

**प्राणभयेऽपि दासताया अस्वीकारम् -**

शिवराजविजये राष्ट्रभावनासञ्चारदृश्यानि बहुषु स्थलेषु दृश्यन्ते । अस्मिन् पराधीनतायाः मूलकारणं भयमेव प्रतिपादितम् । जनाः भयभीताः सन् दासतां स्वीकुर्वन्ति, तस्य परिणाम सर्वे जनाः भुञ्जन्ति । पुरातनकाले नैके राजपुतराजानः प्राणभयेन स्वसर्वस्वं शक्तिशालीशासनाय अर्पितवन्तः । शनै-शनैः तेषां भयं देशद्रोहिणां शक्तिरभवत्। समयान्तरे सम्पूर्णेऽपि भारते देशद्रोहिणां शासनं जातम् । येन शासनेन हिन्दूधर्मस्य, हिन्दूसंस्कृतेः, मन्दिराणां तीर्थस्थानानां ध्वंसनं कृतम् । जनानामपि बलात्कार, हत्या लुण्ठनमित्यादिभिः प्रकारैः शोषणं कृतम् । परिणामतः सम्पूर्णदेशः पराधीनतानर्कम-पश्यत् । सर्वे जनाः प्राणत्यागे तत्पराः सन् दास्तां स्व्यकुर्वन् चेत् देशदुर्दशा नाभवत् । अतः शिवराजविजये ग्रन्थकारेण वीरोचितशैल्या स्वाधीनतायाः महत्त्वं प्रतिपादितम् । परन्तु अधुना समयं परिवर्तितं जातम् । अधुना भारतदेशः स्वतन्त्रदेशः वर्तते । देशे नैके जनाः बलिदानं ददति । परन्तु अत्र बहवः जनाः स्वार्थसिद्धर्थं देशं शोषयन्ति । ग्रन्थे प्रतिपादितं यत् प्राणत्यागेऽपि दासताया अस्वीकारम् अर्थात् सर्वस्वमपि देशहितायसमर्पयतु। यथा - शिवराजविजये शिववीरः गौरसिंहः, यशस्विसिंहः, रघुवीरसिंहेत्यादयः जनाः सर्वस्वमपित्यक्त्वा देशहिताय कार्यम कुर्वन् । तद्वदत्रापिइदमेवोपदेशं यत् यत्किमपि करणीयं देशहिताय एव करणीयम् । शिक्षा ग्रहणादाराभ्य राजनीति कूटनीति रक्षानीति क्रयविक्रय धनसञ्चयम् दानम् प्राणत्यागपर्यन्तं सर्वाण्यपि कार्याणि देशहिताय एव आचरन्तु । जनानां मनसि राष्ट्रभावना तू विद्यते परं ते जनाः हत्या, लुण्ठनं, शोषणं, बलात्कारेत्यादीनि कृत्यानि आचरन्ति । एतादृशी राष्ट्रभावना 'राष्ट्रभावना' न कथ्यते । प्राणत्यागेऽपि ये जनाः देशहितमेव आचरन्ति ते एव जनाः राष्ट्रसेवकाः कथ्यन्ते । इति ग्रन्थकारस्य भावः । अत्र दासताया अस्वीकारस्य भावना विद्यते । परमाधुनिक युगे भारतदेशे न दासता विद्यते न प्राणभयम् । तर्हि लक्षणया अनुमातुं शक्यते यत् जीवनपर्यन्तेषु सर्वेष्वपि कार्येषु देशहितमनिवार्यत्वेन भवेत् ।

**स्वामिभक्तिः**

स्वामिभक्तिरपि सद्गुणः वर्तते। रामायणादिषु ग्रन्थेषु स्वामिभक्तिसन्देशं मिलति। रामायणे यथा - हनुमान् स्वामीरामस्य निरन्तरसेवामकरोत्, स्वामीभक्तिरेव हनुमतः परमकर्त्तव्यम्। तद्वद् अत्रापि स्वामीभक्तिसन्देशं प्राप्नोति। स्वामीभक्तेरर्थं भवति यत् स्वामीनाकथितं कार्यं निःस्वार्थबुद्ध्या करणीयमेव। शिवराजविजये अनन्यस्वामीभक्तिदर्शनं भवति। अनया एव भक्त्या शिववीरः सम्पूर्णमहाराष्ट्रप्रान्ते अधिकारप्राप्तौ सक्षमः जातः। गौरसिंहः, रघुवीरसिंहः, माल्यश्रीकः, भूषणकविः, इत्यादयः जनाः स्वामीभक्तियुक्ताः अभवन्। तेषां चरित्रे निःस्वार्थता, निष्कपटता, भक्तिनिष्ठता च दृश्यते। शिववीरसाम्राज्ये दौवारिकोऽपि स्वामीभक्तिः निरवहत्। यदा गौरसिंहः वेशं परिवर्त्य दौवारिकं परीक्षति स्म तदा सामान्यदौवारिकेऽपि स्वामिभक्तिभावं द्रष्टुं शक्यते। स्वामिभक्ति अर्थात् अपमानयुक्तवचनैः यदा स्वामी निष्कासयति तदापि तस्य अहितं न विचारणीयम्। स्वकार्यैः स्वामीभक्तिं प्रकटयित्वा स्वामीहृदयपरिवर्तनमेव सेवकस्य कर्त्तव्यम्। आधुनिकयुगे स्वामीभक्ति सर्वत्र न दृश्यते। स्वामीभक्ति अर्थात् स्वामीचरित्रमिव स्वचरित्रं भवेत्। आधुनिकयुगे सर्वत्र भ्रष्टाचारः राजते। सर्वे जनाः स्वपोषणे रताः। सर्वकारस्य सामान्याधिकारिजनाऽपि भ्रष्टाचारमाचरन्ति। परन्तु शिवराजविजये दौवारिकप्रसङ्गः निस्वार्थभावनां पाठयति, भारतदेशः धनधान्यसंपन्नः समृद्धश्चास्ति।

तथापि जनाः आत्मनिर्भराः न भवन्ति। तस्य मुख्यकारणमस्ति यत् स्वामिना (सर्वकारेण) नियुक्ताः जना स्वोदरमेव स्वगृहमेव पूरयन्ति। ते जनाः सामान्यजनानां चिन्तनं न कृत्वा देशरुप्यकाणि अन्यदेशेषु संचयन्ति। शिववीरकाले देशभक्तियुक्ताः जनाः राजतन्त्रं निरवहन्। सर्वस्वमपि त्यक्त्वा सामान्यजनानां रक्षणं पालनञ्च अकुर्वन्। परन्तु अधुना नैके जनाः मात्र धनसञ्चयार्थमेव राजनीती गच्छन्ति। मिथ्या वचनैः जनान् प्रलोभ्य तान् शोषयन्ति। अत्र अन्यस्मिन् विषये चर्चा विहाय, कथनस्य तात्पर्यमेतदेव यत् स्वकर्तव्यमेव सर्वोच्चकर्तव्यं ज्ञात्वा कार्यभारं निरवहन्। अनेन प्रकारेण समृद्धराष्ट्रनिर्माणाय, स्वाधीनराष्ट्रनिर्माणाय च स्वामीभक्तिः परमावश्यका वर्तते। इति शिवराजविजये प्रतिपादितम्।

**धर्मरक्षणम् -**

> **''वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा।**
> **सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि[3]।।''**
> **''धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।**
> **तस्माद्धर्मो न हन्तव्यो माँ नो धर्मो हतोऽवधीत्[4] ।।**

अर्थात् यः धर्म रक्षति धर्मः तं रक्षति। शास्त्रेषु धर्मस्य महत्त्वमधिकं वर्तते। तदनुसारं ग्रन्थकारेणापि शास्त्राणामेवानुसरणं कृतम्। ग्रन्थेऽस्मिन् प्रत्येकस्थले धर्मचर्चा न कृता। केन प्रकारेण धर्महानिरभवत्? केन प्रकारेण मुगलशासनेन मन्दिराणां ध्वंसनमभवत्? केन प्रकारेण वधबलात्कारेत्यादीनि कृत्यानि अभवन्? अर्थात् सर्वाण्यपि कार्याणि अधर्मयुक्ताननि एव। तस्मिन् समये शिववीरः रघुवीरसदृशाश्च जनाः धर्मरक्षणाय तत्पराः अभवन्। तस्मिन् तेषां कोऽपि स्वार्थः नासीत्, परं ते जनाः अधर्म न सेवन्ति। धर्मरक्षणाय शिववीरेण मन्दिराणि स्थापितानि। प्रत्येके कोशद्वये आश्रमनिर्माणमपि कृतम्। मुगलत्रासेभ्यः हिन्दूजनान् अरक्षन् अनेन प्रकारेण ग्रन्थकारेण ग्रन्थेऽस्मिन्

धर्मरक्षणमपि प्रतिपादितम् । आधुनिकयुगस्य ज्वलन्तासमस्या जातिवादमस्ति । जातिवादेन सशक्ताः जनाः सामान्यजनान् शोषन्ति । परस्परं भेदभावमाचरन्ति । आधुनिकबहुषु स्थलेषु धर्माडम्बरः दृश्यते, विना विचार्य जना इच्छानुसारं धर्मं परिवर्तयन्ति । केचन जनाः इस्लामधर्मं स्वीकुर्वन्ति, केचन ईसाईधर्मं स्वीकुर्वन्ति, येषां यस्मिन् रूचिः ते जनाः तस्मिन्-तस्मिन् धर्मं स्वीकुर्वन्ति । केचनजनाः साधुवेषमवधृत्य धर्माडम्बरं रचयन्ति । धर्मोपरि सर्वकारः चलति, धर्मेण जनाः परस्परं लुण्ठन्ति । आधुनिक समये धर्माडम्बरः, धर्मपरिवर्तनम्, धर्महननञ्च दृष्ट्वा ग्रन्थोऽयं धर्ममुपदिशति । यथा शास्त्रे प्रतिपादितं 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' अनेन प्रकारेण शिववीरादयः वीराः स्वधर्मरक्षणाय प्राणानत्यजन् । धर्महतकानां वधं तैः कृतम् । अर्थात् ग्रन्थः स्वधर्मसेवनस्य, स्वधर्मरक्षणस्य चोपदेशं प्रददाति । धर्मरक्षणेत्यादिनां विषयानां शिक्षणं ग्रन्थोपयोगितां सिद्धति । भारते यदा परधर्मिणामाक्रमणमभविष्यत् तदा तदा धर्मस्य हानिरभवत् । अतः आधुनिकयुगे धर्मपरिवर्तनस्य धर्माडम्बरस्य च समस्यां दृष्ट्वा स्वधर्मेव पालनीयं सेवनीयञ्च इति ग्रन्थे प्रतिपादितम् । 'धर्मरक्षणाय सर्वमपि त्यक्त्वा निर्भयतया कष्टं सहनीयम्' इत्यपि ग्रन्थे वर्णितम् । आधुनिकयुगे जनाः धर्मस्य व्यापारं कुर्वन्ति । कष्टसहनस्य तु का वार्ता ? जनाः स्वोपभोगस्य साधनान्यपि धर्मव्यापारेणैव प्राप्नुवन्ति, तर्हि एतादृश्यां परिस्थित्यां कः जनः धर्मार्थं कष्टसहनं करिष्यति । परं शिववीरः, रघुवीरः, गौरसिंहः, यशस्विसिंहादयः जनाः सर्वमपि त्यक्त्वा धर्मरक्षणमकरोत् । शिववीरादिनां सर्वेषां वीराणां पार्श्वे उपभोगस्य नैकानि साधनान्यभवन् । परं धर्मरक्षणाय वेषं परिवर्त्य यत्र तत्र अभ्रमन् , एवमधुना धर्मेण एव उपभोगं कुर्वन्ति । धर्मेण धनमागमिष्यतीति मत्वा निरन्तरं धर्महननं, धर्माडम्बरं च आचरन्ति । अत एतादृशानां सद्ग्रन्थानां आवश्यकता वर्तते - ये ग्रन्थाः धर्मायजीवनं, धर्मायैव मरणमिति पाठं पाठयन्ति । एतादृशानां धर्मप्रतिपादकग्रन्थानां उपयोगिता कदापि समाप्ता न भविष्यति । यावत्पर्यन्तं धर्मस्यास्तित्त्वं भविष्यति तावत् पर्यन्तमेतादृशाः ग्रन्थाः धर्ममार्गं द्रक्ष्यन्ति ।

**शठे शाठ्यं समाचरेत्[5] -**

ग्रन्थस्योपयोगिता विभिन्नप्रकारैः सिद्धा भवति । ग्रन्थवैशिष्ट्यमस्ति यत् ग्रन्थोऽयं देशभक्तिः, राष्ट्ररक्षणम्, धर्मरक्षणम्, धर्मस्थापनमित्यपि प्रतिपादितम् । अर्थात् साम-दाम-दण्ड-भेद कयापि रीत्या व्यवहृत्य तेषां विनाशमाचरेत् । पुरातनकाले अर्थात् मुगलशासने मुगलाः हिन्दूजनानामुपर्यत्याचारमकुर्वन् । ते जनाः यत्र कुत्रापि स्त्रीं दृष्ट्वा भोगनभुञ्जन् । आधुनिकयुगेऽपि एतादृशीरेव स्थितिः । आधुनिकयुगे बहवः जनाः निन्दनीयकृत्यानि आचरन्ति । तदृष्ट्वा एतादृशानां ग्रन्थोपदेशानां स्मरणं जायते । ग्रन्थे प्रतिपादितं यत् मुगलसैनिकः विप्रकन्यामपहरत् । परन्तु कन्यायाः रुदनस्वरं श्रुत्वा गौरसिंहदयः तत्र गत्वा कन्यारक्षणमकुर्वन् । गौरसिंहः स्वखड्गेनैव तस्य शिरं चिच्छेद । अपजलखानषड्यन्त्रं ज्ञात्वा शिववीरः तमपि मिलित्वा अहन् ।

अनेन प्रकारेण शास्तिखानः, चान्द्रखानः, क्रूरसिंहेत्यादिनधर्मसेवकान् दृष्ट्वा तत्रैव तैः मारितम् । अधुनापि एतादृशमेवात्याचाराः भवन्ति । केचनजनाः देशं विलुण्ठ्य परदेशे गच्छन्ति, केचन अत्रैव स्थित्वा देशद्रोहिणां साहाय्यं कुर्वन्ति । केचनजनाः चौर्यलुण्ठनादिनी कार्याणि सम्पादयित्वा जनानां वधमाचरन्ति । अधुना तादृशमेव वातावरणं सञ्जायते, यादृशं वातावरणं देशद्रोहि- साम्राज्येऽभवत् । अतः ग्रन्थकारः सावधानत्या चेतयति यत् 'शठे शाठ्यं समाचरेत्' । भारतदेशे प्राचीनकालादेव स्त्रीणां शोषणं प्रचलितमस्ति, मुगलकालादेव गोवधम्,

गोमांसभक्षणमित्यादिनी कृत्यानि मुगला आचरन्ति। परन्तु अधुना ते जनाः स्वतन्त्रतया विचरन्ति, गोमांसव्यापारं कुर्वन्ति। प्रतिदिनं हिन्दूजनन्याः गोमातुः वधं भवन्ति। परन्तु भ्रष्टाः जनाः स्वार्थसिद्ध्यर्थं किमपि कर्तुं शक्नोति। शनैः शनैरैतादृशानि कार्याणि वर्धन्ति। अतः 'शठे शाठ्यं समाचरेत्' इति भावना उचितैव। ग्रन्थकारस्य उद्देश्य मात्र ग्रन्थप्रतिपादनमेव न, परन्तु ग्रन्थेनानेन भविष्यकालेऽपि जनाः लाभान्विताः भवेयुः इति भावना विद्यते। शिवराजविजयग्रन्थे राजनीतिः, धर्मः, शिक्षा, लोकाचारः, शिष्टाचारः, कला, दुर्गः, सेना, अस्त्रशस्त्रविद्या, गुप्तचरयोजना, निर्भयतेत्यादयः नैकाः विषयाः वर्तन्ते। इतोऽप्यधिकाः विषयाः भवन्ति, पुरातनकालिकघटनामाश्रित्य ग्रन्थकाराः ग्रन्थरचनाः कुर्वन्ति, ते ग्रन्थाः तस्मिन् समयस्य दर्शनं कारयन्ति। तस्मिन् समये जनानां का त्रुटिः ? का शक्तिः ? कीदृशी नीति ? कीदृशं साहसम् ? इत्यादीन् सर्वानपि विषयानवलम्ब्य सा घटना वा तद् ग्रन्थं सम्पूर्णतां लभते। ग्रन्थे किं भविष्यति चेत् किं करणीयमित्यादयोपदेशाः समाहिताः सन्ति। अतः ते ग्रन्थाः सर्वमपि पाठयन्ति। शिवराजविजयग्रन्थः बलं, बुद्धिः, अस्त्रशस्त्रं, शास्त्रं, कला सङ्गीतादयः सर्वे विषयाः पाठयित्वा देशरक्षणाय राष्ट्रभावनां सञ्चारयति। शठे शाठ्यं समाचर्य्य शिववीरसैनिकाः सम्पूर्णमहाराष्ट्रप्रान्ते स्वाधीनतामप्राप्नुवन्। अनेन प्रकारेण तस्मिन् समये ग्रन्थस्य आवश्यकता अभवत्। एवामधुनाऽपि एतादृशानां ग्रन्थानामावश्यकता भवति।

**सन्दर्भाः-**

1. मनुस्मृति- 8/15
2. तैत्तिरीयोपनिषद, शिक्षावल्ली
3. नीतिशतकम्
4. मनुस्मृति-8/15
5. महाभारत, विदुरनीतिः

**सन्दर्भग्रन्थः**

1.. शिवराजविजयः- 'अर्चना' डॉ.रमाशङ्कर मिश्र, चौखम्बा सुरभारती प्रकाशन, वाराणसी 2018
2.. मनुस्मृतिः - चौखम्भा-संस्कृत-संस्थानम्, वाराणसी - 1970
3. तैत्तिरीयोपनिषद् - www.sanskritdocuments.org
4. नीतिशतकम् - http://sanskritdocuments. org
5. महाभारतम्, पं.श्रीपाद दामोदर सालवलेकर, स्वाध्याय मण्डन, पारडी, 1973
6. विदुरनीतिः- www.sanskritdocuments.org

*सहायकाचार्यः, साहित्यविभागः,*
*राजकीय-महाराज-आचार्य-संस्कृतमहाविद्यालयः,*
*जयपुरम्*

# महाकविकालिदासविरचिते रघुवंशे लोकाभ्युदयाय राज्ञो दिलीपस्य कर्माणि

**सुपर्णा सेनः**



महाकविकालिदासस्य साहित्यसृष्टेरन्यतममेकमुद्देश्यमस्ति लोककल्याणम्। मानवानां जीवने याः समस्याः सन्ति, तासां सर्वासां समस्यानां समाधानं महाकविना कालिदासेन स्वरचनासु प्रतिपादितम्। महाकविना कालिदासेन सप्तकाव्यानि विरचितानि। तेषु सप्तकाव्येषु मालविकाग्निमित्रं विक्रमोर्वशीयमभिज्ञानशाकुन्तलं चेति त्रीणि दृश्यकाव्यानि सन्ति, ऋतुसंहारं रघुवंशं कुमारसम्भवं मेघदूतं चेति चत्वारि श्रव्यकाव्यानि सन्ति। एतेषु सप्तकाव्येषु जगतः कल्याणस्य कृते ये सिद्धान्ताः सन्ति, ते सिद्धान्ताः साम्प्रतिके काले भविष्ये समये चातीवावश्यकाः। सप्तकाव्येषु लोककल्याणविषयकभावनासंयुक्तं रघुवंशमन्यतममस्ति। दिलीपपुत्रस्य रघोर्नाम्ना समग्र एव सूर्यवंशो रघुवंशो बभूव। नामकरणस्यास्य कारणरूपेण महाकविकालिदास उक्तवान्यत्

**ततः समानीय समानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।**
**वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ।।**[1]

महाकविरस्मिन्महाकाव्ये प्रजायै गृहमेधिनां दिलीपरध्वजदुष्यन्तादीनां राज्ञां वर्णनं कृतवान्। भारतवर्षेण सह समस्तस्य जगतः जनाः प्रजाः प्रति एतेषां राज्ञां सहजस्नेहं राष्ट्रं प्रति समर्पणभावं चावलोक्य विस्मिता भवन्ति। लोकाभ्युदयाय राज्ञो दिलीपस्य कर्माणि शोधपत्रेऽस्मिन्नालोच्यते। अनेन विवेचनेन लाभो भवति यत्, लोककल्याणार्थं केन सह कथं व्यवहर्त्तव्यम्? महाकविना कालिदासेन कथितानां लोकसङ्ग्रहविषयकसिद्धान्तानां परिपालनं कथं करणीयम्? इत्यादिविषयान्मनुष्याः सम्यक्प्रकारेण ज्ञातुं शक्नुवन्ति। येन सम्प्रेरितास्ते सदैव कर्तव्यनिष्ठया तेषां सिद्धान्तानां कर्त्तव्यानां च पालनं कृत्वा देशं प्रत्युपकारिणो नागरिका भवेयुः।

'लोककल्याणम्' इत्यत्र 'लोकः' 'कल्याणम्' चेति पदद्वयं विद्यमानमस्ति। शास्त्रेभ्यो लोकशब्देन त्रिलोकादयोऽर्था लभ्यन्ते । लोकस्य कल्याणाय मानवैः स्वस्वभावनाः परित्यज्य निष्कामकर्माणि क्रियन्ते। सम्पूर्ण रघुवंशं लोककल्याणभावनया परिपूर्णमस्ति।

काव्यस्य ये नायका भवन्ति ते चरित्रवन्तः शुद्धिमन्तश्च भवेयुरिति सर्वे कवय इच्छन्ति। कारणमस्ति सच्चरित्रयुक्तान्नायकान्दृष्ट्वा जना: समाजकल्याणस्य कृते शिक्षालाभं कुर्वन्ति। लोके प्रसिद्धोऽस्ति यत्, समाजस्य श्रेष्ठा जना यानि कार्याणि कुर्वन्तीतरे जनास्तेषां कार्याणामनुकरणं कुर्वन्ति। अस्मिन्विषये गीतायां श्रीकृष्णोऽप्यर्जुनं प्रत्युवाद यत्,

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।**[2]

एवं वैवस्वतवंशे जातस्य शुद्धिमत्तरस्य राज्ञो दिलीपस्य वर्णना कालिदासेन प्रथमे सर्गे क्रियते -

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ।।**[3]

महाकविः रघुवंशे प्रत्यक्षरूपेण परोक्षरूपेण चास्मान्दर्शयामास यल्लोककल्याणस्य कृते के के गुणा नृपेषु भवेयुरिति। तत्र लोकाभ्युदयाय राज्यस्य परिचालनार्थं सामर्थ्यं, राजनीतेर्ज्ञानं, नैतिकता, शास्त्रेष्वकुण्ठिता बुद्धिः, दया, त्यागः, तीक्ष्णा प्रज्ञा, सदाचारः, धर्मस्य सम्यग्ज्ञानम्, भीमकान्तादिगुणाः, सत्सङ्गः, समयस्य सम्यग्ज्ञानमित्यादीनि नृपेषु स्युरिति महाकवेराशयो वर्तते। रघुवंश-महाकाव्यस्य प्रथमे द्वितीये तृतीये च सर्गत्रये राज्ञो दिलीपस्य लोककल्याणस्य विषये चिन्तनान्युपलभ्यन्ते। प्रजानां कल्याणायादर्शेषु नृपेषु यानि यानि वैशिष्टान्यावश्यकानि तानि तानि वैशिष्टानि दिलीपरध्वजदुष्यन्तादिनृपेषु विद्यमानानि बभूवुः। रघुवंशमहाकाव्यस्य विविधेषु स्थानेषु महाकविः कालिदासः पाठकांस्तांस्तान्गुणान्दर्शयाञ्चकार। रघुवंशस्य प्रथमे सर्गे यथा -

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ।।**
**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम् ।।**
**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ।।**
**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ।।**[4]

यावत्पर्यन्तं फलस्य प्राप्तिर्न भवति तावत्पर्यन्तं रघुवंशीय-नृपास्तेषामारम्भाणि कर्माण्याचरितवन्तः। एवमाफलोदयकर्मभिर्रघुभिरिव मानवैर्लोककल्याणार्थमालस्यं त्यक्त्वा सर्वदा कर्म सम्पादनीयम्। रघुवंशस्य प्रथमस्य सर्गस्योनत्रिंशत्तमे श्लोके महाकविकालिदास उक्तवान्यत् -

**तं वेधा विदधे नूनं महाभूतसमाधिना ।**
**तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ।।**[5]

अर्थात्प्रजापतिर्नूनं महाभूतसमाधिना राजानं दिलीपं ससर्ज, यतो हि तस्य सर्वे गुणाः परार्थैकफला बभूवुः।

अर्चितार्थिनां प्रजानामभिलाषा रघुवंशीयैर्नृपैर्यथा पूरयाञ्चक्रिरे तथा दोषिनां कृते समुचितदण्डव्यवस्थाया उद्भवोऽपि तैर्नृपैर्वृतः। वैदिककालात्प्रभृति दण्डस्य प्रयोजनं समाजे प्रवह्यमानमस्ति। यस्मिन्समाजे दण्डस्य सम्यग्प्रकारेण प्रयोगो न भवति तस्मिन्समाजे मानविकावक्षयो भवत्येव।। यथोक्तं मनुसंहितायाम् -

**यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।**
**शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ।।**
**अद्यात्काकः पुरोडाशं श्वा च लिह्याद्धविस्तथा ।**
**स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ।।**
**सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।**
**दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ।।**[6]

अतोऽपराधनिवृत्त्यै धर्मरक्षायै च दण्डव्यवस्थायाः परिपालनं राज्ञावश्यमेव कर्तव्यम्। महाकवेः कालिदासस्य दृष्ट्यां जगति धर्मस्य स्थितिमक्षुण्णकरणार्थं दोषिभ्यो दण्डप्रदानमवश्यमेव भवितव्यम्। प्रयासोऽयं यथापराधदण्डेषु रघुषु नृपेषु दृश्यते। यथोक्तं रघुवंशे कालिदासेन -

**यथापराधदण्डानाम् ।**[7]

अपि च

**स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।**
**आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥**

अपराधसदृशो दण्डप्रयोगः करणीयः। अनेन विना जगतः स्थितिरूपो धर्मो न भवत्यतो लोकस्थित्यै केवलमेव नृपो दिलीपो दण्ड्यान्दण्डयाञ्चकार न त्वर्थलोभेन, सन्तानार्थं स केवलं परिनिनाय न तु कामवशात्। एवं रूपेण राज्ञो दिलीपस्यार्थकामौ धर्म एव बभूवतुः -

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनिषीणः ॥**[9]

रघुवंश-महाकाव्ये स्वस्थशरीरयुक्तानां क्षत्रियाणां नृपाणां वर्णना प्राप्यते। रघुवंशमहाकाव्यस्य विविधेषु सर्गेषु कालिदासः क्षत्रीयपदस्य तात्पर्यं निरूपयाञ्चकार। कालिदासस्य मतेन ते क्षत्रिया नृपा भवन्ति ये जनानां रक्षणं कुर्वन्ति। विषयेऽस्मिन् रघुवंशस्य द्वितीये सर्गे तेनोक्तम् -

**क्षत्रात्किल त्रायत इत्युदनः क्षत्रस्य शब्दो भुवनेषु रूढः ।**
**राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥**[10]

दुष्टानां दमने यथा क्षत्रिय-नृपाणां भूमिका तिष्ठति तथैव शिष्टानां पालनेऽपि। लोककल्याणकारिणो बलवन्तो नृपाः सर्वदा आत्मनोऽन्येषां च रक्षणादिकं कर्तुं शक्नुवन्ति। रघुवंशस्य प्रथमे सर्गे स्वयं क्षात्रो धर्मो जगतो रक्षणाय व्यूढोरस्कस्य वृषस्कन्धस्य शालप्रांशोरिव महाबाहोस्तस्य राज्ञो दिलीपस्य स्वव्यापारानुरूपं विपन्नत्राणादिसमर्थं देहमाश्रितवान् । आशयोऽस्ति स्वयं वीरधर्मो वैवस्वतवंशे जातस्यातीव पवित्रस्य दिलीपस्य रूपं कृत्वा ववृते -

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥**[11]

जनकल्याणभावनया प्रेरितो राजा यथा प्रजानां पिता भवति तथा पुत्रोऽपि भवति। एक आदर्शः पिता यथा सन्तानं कुमार्गात्सन्मार्गं गमयति तथा रघुवंशे महाकाव्ये सन्तानस्य पितृवत् श्रीरामः प्रजाः सन्मार्गं गमयाञ्चकार। अपि च पितुः पुत्रैरिव श्रीरामो विपदि प्रजानां रक्षणं चकार -

**तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्।**
**तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेन पुत्री ॥**[12]

पितरः स्वसन्तानानां नियन्त्रणं कुर्वन्ति, तेषां परिपालनादिकं कुर्वन्ति, तेषां संरक्षणाय स्वकीयं जीवनं तुच्छरूपेण स्वीकुर्वन्ति। एवं सर्वातिरिक्तसारः सर्वतेजोऽभिभावी सर्वोन्नतशरीरधारी स राजा दिलीपोऽपि प्रजाः

स्वसन्तानानुरूपं ददर्श, तेषां रक्षणं चकार। एतदर्थं महाकविः कालिदासः प्रजानुरञ्जकं लोकपालकं राजानं दिलीपं प्रजानां वास्तविकपितारूपेण प्रतिपादितवान् -

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः ।।**[13]

मनुष्येतरेषु प्राणिष्वपि राज्ञो दिलीपस्य स्वाभाविकी प्रियता बभूव। रघुवंशमहाकाव्यस्य द्वितीये सर्गे यथा राजा दिलीपो नन्दिन्याः रक्षणाय प्रागेव सिंहं प्रत्यागतवान्।

केवलं नृपा न रघुवंशे महाकाव्ये नृपाणां पत्न्योऽपि लोककल्याणभावनासंयुक्ता दयादाक्षिण्यगुणसंपन्नाश्च बभूवुः। यथा राज्ञो दिलीपस्य दाक्षिण्यरूढेन आख्यानेनातिनिर्मला मगधवंशजा भार्या सुदक्षिणा यज्ञस्य दक्षिणाख्या पत्नीव बभूव -

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ।।**[14]

एवं रघुवंशनृपाणां लोककल्याणभावनायुक्ता दयादानदाक्षिण्यादयो गुणा आदर्शभूताः सर्वेषां मानवानां कृते।

समाजे जटिलता न भवेत्, एतदर्थं कालिदासस्य रचनासु नृपास्तथा चान्येऽपि जना निष्ठया सह वर्णाश्रमधर्मस्य पालनं कृतवन्तः। विद्याश्चतुर्दशेति शास्त्रकारैः स्वीकृताः -

**अङ्गानि वेदाश्चत्वारोमीमांसा न्यायविस्तरः ।**
**पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ।।**

रघुकुलोद्भवा नृपाः शैशवे एतासां सर्वासां विद्यानामध्ययनं कृतवन्तः। यौवने ते नृपा धर्मशास्त्रस्यानुसारेण विषयभोगं चक्रुः। एवं वृद्धवयसि ऋषिव्रतमाश्रयणयादनन्तरमन्तकाले ते योगेन देहं त्यक्त्वा मुक्तिं लब्धवन्तः -

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ।।**[15]

एवं रघुवंशस्य तृतीयस्य सर्गस्यान्तिमे श्लोके दृश्यते यत्विषयव्यावृत्तात्मा स राजा दिलीपः सुयोग्याय पुत्राय रघवे यथाविधि साम्राज्यस्य दायित्वं दत्वा पत्न्या सह वनं जगाम -

**अत स विषयव्यावृत्तात्मा यथाविधि सूनवे**
**नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।।**
**मुतिवनतरुच्छायां देव्या तया सह शिश्रिये**
**गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ।।**[16]

एवं लोककल्याणस्य सिद्धान्तयुक्तानि बहून्यदाहरणानि रघवंशे प्राप्यन्ते। रघवंशमहाकाव्यस्य प्रथम-सर्गस्याष्टादशे श्लोके यथा -

**प्रजानामेव भूत्यर्थं स ताभ्यो बलीमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ।।**[17]

महाकविना कालिदासेनानेन श्लोकेन राज्ञो दिलीपस्य प्रजानां हितार्थं प्रयुक्तं कर्मोल्लिखितम् । राजा दिलीपः

प्रजानामेव कल्याणार्थं ताभ्यो मृदुकरं जग्राहेति श्लोकस्यास्याशयो वर्तते। मनुना प्रवर्तितेन नीत्यनुसारेण राजा दिलीपः प्रजानां कल्याणायैव राज्यस्य शासनं करस्य ग्रहणञ्च कृतवान्। रविवत्प्रजानामुन्नतये तेन करस्य सम्यग्रूपेण व्यवहारोऽपि कृतः। रवेसाकर्षणमिव राज्ञो दिलीपस्य करस्य ग्रहणमिति महाकविना प्रतिपादितम्। सूर्यस्य किरणेन पृथिव्या जलं वाष्पो भवति, तदनन्तरं मेघो भवति, मेघावृष्टिः, वृष्ट्या पृथिवी शस्यपूर्णा भवति। अनेन प्रकारेण सूर्यस्तस्य प्रखरेण किरणेन पृथिव्या जलस्य ग्रहणं कृत्वा जलानां सहस्रगुणं पृथिव्यै पुनः ददाति। एवं रूपेण सूर्य इव नृपो दिलीपोऽपि करस्य ग्रहणं कृत्वा लोककल्याणाय प्रजानां कृते तस्य करस्य सदुपयोगं कृतवान्।

सम्यक्तया राज्यस्य परिचालनाय केचन नियमा भवन्ति। राज्यस्य कल्याणभावनासंयुक्ताः सूर्यवंशीया नृपास्तेषां स्वसन्तानतुल्याः प्रजाश्च सर्वदा नियमानां पालनं कृत्वा सुखिनो बभूवुः, अनेन तेषां राज्यं दृढमपि बभूव। एवं नियन्तुर्नेमिवृत्तय इवादिलीपाद्राज्यस्य प्रजा अपि मनुना प्रवर्तितेन नियमानां सम्यग्रूपेण पालनं चक्रुः -

**रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।**
**न व्यतीयुः प्रजास्तस्य नियन्तुनेमिवृत्तयः ।।**[18]

रघुवंशे राजनीतेः केन्द्रबिन्दुरेव राजा। आदर्शराजनैतिक-परिवेशस्य निर्माणाय तेषां नृपाणां प्रयासः प्रशंसनीयः। नृपो रामः पत्न्यां सीतायां अतीव सिष्णेह परन्तु लोककल्याणायैव स प्राणप्रियां सीतां त्यक्तवान् -

**तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः।**
**त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ।।**[19]

रघुवंशस्य प्रथमे सर्गे राजानं दिलीपं दृष्टा वशिष्ठमुनिरपि राज्यस्य स्थितेर्विषये चिन्तितवानासीत्। अतः स मुनिरातिथ्यक्रियाशान्तरथक्षोभपरिश्रमं राज्याश्रममुनिं तं दिलीपं राज्यस्य कुशलं पप्रच्छ -

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनि मुनिः ।।**[20]

नन्दिन्या आशीर्वादादनन्तरं राज्ञो दिलीपस्य पुत्रो रघोरपि जन्म लोकाभ्युदयायैव बभूव -

**दिशः प्रसेदर्मरुतो वः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।**
**बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ।।**[21]

एवं धर्मस्वरूपेण जनकल्याणभावनायाः प्रस्तुतिकरणं रघुवंशमहाकाव्यस्य विशिष्टं वैशिष्ट्यमस्ति। रघुवंशे लोकाभ्युदयाय राज्ञो दिलीपस्य कर्माण्याधुनिकराजकीयकार्येषु प्रेरणास्पदं भवितुमर्हन्ति। इदानीमपि बहूनां देशानां राजकीयक्षेत्रे भोगवादिसंस्कृतेः साम्राज्यं वर्तते। बहुषु स्थानेषु नैतिकतायाः प्रदूषणमवलोक्यते। बहवः मन्त्रिणो धर्मानुसारेणाचरणमकृत्वा केवलं स्वसमृद्धि प्राप्त्यर्थं स्वमन्त्रित्वं स्वराजत्वं च सुवर्णावसाररूपेण स्वीकुर्वन्ति। राजनैतिकक्षेत्रे एवंभूतस्य प्रदूषणस्य निवारणाय रघवंशे प्रबोधितं राज्ञो दिलीपस्य चरितं लोकाभ्युदयाय तस्य नृपस्य कर्माणि च निदानभूतानि निदर्शनानीति। रघवंशेऽग्निवर्णो नृपोऽनैतिकमार्गेण चलितवान्नतः तस्य विनाशो बभूव। ये तु धर्मस्य आश्रयं नीतवन्तः, ते तु जयं लब्धवन्तः। लेखेऽस्मिन्पाठका लोकाभ्युदयाय राज्ञो दिलीपस्य कर्माणि दृष्ट्वा सुष्ठरूपेण तासां नीतिनां प्रयोगमाध्यमेन राष्ट्रनिर्माणाय स्वकीयस्य योगदानं दास्यन्तीति मन्ये।

**सन्दर्भाः -**

1. रघुवंशम्, द्वितीयः सर्गः, श्लो. 64
2. श्रीमद्भगवद्गीता, तृतीयोऽध्यायः, श्लो. 21
3. रघुवंशम्, प्रथमः सर्गः, श्लो. 12
4. रघुवंशम् ,प्रथमः सर्गः, श्लो. 5-8
5. रघुवंशम्, प्रथमः सर्गः, श्लो. 29
6. मनुसंहिता, सप्तमोऽध्यायः, 20-22
7. रघुवंशम्, प्रथमः सर्गः, श्लो. 6
8. रघुवंशम्, चतुर्थः सर्गः, श्लो. 8
9. रघुवंशम्, प्रथमः सर्गः, श्लो. 25
10. रघुवंशम्, द्वितीयः सर्गः, श्लो. 53
11. रघुवंशम्, प्रथमः सर्गः, श्लो. 13
12. रघुवंशम्, चतुर्दशः सर्गः, श्लो. 23
13. रघुवंशम्, प्रथमः सर्गः, श्लो. 24
14. रघुवंशम्, प्रथमः सर्गः, श्लो. 31
15. रघुवंशम्, प्रथमः सर्गः, श्लो. 8
16. रघुवंशम्, तृतीयः सर्गः, श्लो. 70
17. रघुवंशम्, प्रथमः सर्गः, श्लो. 18
18. रघुवंशम्, प्रथमः सर्गः, श्लो. 17
19. रघुवंशम्, चतुर्दशः सर्गः, श्लो. 39
20. रघुवंशम्, प्रथमः सर्गः, श्लो. 58
21. रघुवंशम्, तृतीयः सर्गः, श्लो. 14

**सन्दर्भग्रन्थाः -**

1. अभिज्ञानशाकुन्तलम्, कालिदासः, राघवभट्टः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2016
2. कालिदासग्रन्थावली, कालिदासः, ब्रह्मानन्दत्रिपाठी, पण्डितः रामतेजशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, 2019
3. मेघदूतं, कालिदासः, डा. दयाशङ्करशास्त्री, चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, 2017
4. अभिज्ञानशाकुन्तलं- कालिदासः, डॉ. कपिलदेवद्विवेदी, साहित्यसंस्थानप्रकाशनम्, वाराणसी, 1976
5. विक्रमोर्वशीयम् - महाकविकालिदासः, टीकाकार आचार्यः चुन्नीलालशुक्लः, साहित्यभण्डारः, सुभाषबाजार, मेरठ, 1978
6. रघुवंशम् - महाकविकालिदासः, नारायणरामाचार्यः, चौखम्भा ओरियन्टालिया, वाराणसी, 1987
7. मेघदूतम् - महाकविकालिदासः, डॉ. दयाशंकरः शास्त्री, चौखम्बासुरभारतीप्रकाशनं, वाराणसी, 2012
8. ऋतुसंहारम्- महाकविकालिदासः, शिवप्रसाद द्विवेदी, चौखम्बासुरभारतीप्रकाशनं, वाराणसी, 2012
9. मेघदूतं - कालिदासः, मोतीलालबनारसीदासः, वाराणसी, 1919

10. कालिदास ग्रन्थावली - सीतारामचतुर्वेदी, भारतप्रकाशनमन्दिरम्, अलीगढ़म्, तृतीयसंस्करणम्, संवत् 2019
11. कालिदासग्रन्थावली - ब्रह्मानन्दत्रिपाठी, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, 2009
12. ऋग्वेद, नागपब्लिशर्स, जवाहरनगरम्, दिल्ली, 1978
13. श्रीमद्भगवद्गीता, श्री स्वामी शिवानंद-सरस्वती, अनु.- श्रीमती गुलशन-सचदेवः, दिव्य-जीवन-संघ-प्रकाशनम्, प्रथम-हिन्दी-संस्करणम्, उत्तरांचलम्, 2005ई.
14. श्रीमद्भगवद्गीता-भाष्यम् , (प्रथमो भागः), श्रीशङ्कराचार्येण विरचितम्, के.उ.वि.शि.संस्थानम्, सारनाथः, वाराणसी
15. गीता-प्रवचन, आचार्यः बिनोवा भावे, अनु0- हरिभाऊ उपाध्यायः, सस्ता-साहित्य-मण्डल- प्रकाशनं, नई दिल्ली, 1947ई.
16. महाकवि कालिदास - डॉ. रमाशंकरतिवारी, चौखम्बाविद्याभवनम्, वाराणसी, 1993
17. संस्कृत साहित्य का इतिहास- डॉ उमाशङ्करशर्मा, चौखम्भा भारती अकादमी, वाराणसी, 2010
18. कालिदास का चिन्तन एवं अनुभूतियाँ, डॉ. अच्युतानन्द घिल्डियालः, भारतीय प्राच्य विद्या शोध संस्थानं, वाराणसी
19. संस्कृत साहित्य का इतिहास - प्रो. हरेकृष्णशतपथी, किताबमहलः, कटकः, 1998
20. History of Sanskrit Poetics, S.K.De, Bancharam Akrur Lane, Calcutta, 1960
21. History of Sanskrit Poetics, P.V. Kane, Motilal Banarasidass, Delhi, 1987
22. The Sanskrit Drama in its Origin, Development Theory and Practice, A.B. Keith, Motilal Banarasidass Publishers, Delhi, 2015

**कोशग्रन्थाः**

1. अमरकोषः , श्रीमन्नालालः 'अभिमन्युः', चौखम्बा विद्या भवनम्, वाराणसी, 2008
2. वाचस्पत्यं, तारानाथभट्टाचार्यः , राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2004
3. शब्दकल्पद्रुमः, राधाकान्तदेवः, राष्ट्रीयसंस्कृतसंस्थानम् , नवदेहली, 2002
4. संस्कृत-हिन्दी कोश, वामनशिवराम-आप्टे, नागप्रकाशनं, देहली, 1998

*शोधच्छात्रा, संस्कृतविभागः,*
*महात्मागान्धीकेन्द्रीयविश्वविद्यालयः,*
*मोतिहारी, बिहार*

# संस्कृतशिक्षकप्रशिक्षणे गुणाधानम्

डॉ विनोदकुमारशर्मा



**संस्कृतं संस्कृतेर्मूलं ज्ञान-विज्ञानवारिधिः।**
**वेदतत्त्वार्थसंजुष्टं लोकालोककरं शिवम् ।।**
**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।। इति।**

अस्माकं भारतदेशस्य विश्वासः वर्तते यत् सृष्टिकर्तुः ब्रह्मणः मुखात् दिव्या संस्कृतवाणी प्रकटिता इति। भारतीयसंस्कृतिः संस्कृताश्रया एव सुरक्षिता पल्लविता तत्रदौ कपिलेनापि उक्तम्।

संस्कृतशिक्षकशिक्षायां गुणस्तरसंवर्धनम् इति विषयमाधारीकृत्य आकलनमूल्याङ्कनदृष्ट्या गुणस्तरसंवर्धनम्, शास्त्रशिक्षणपद्धतीनां गुणस्तरसंवर्धनम्, शिक्षामनोविज्ञानदृष्ट्या गुणस्तरसंवर्धनम्, भाषाशिक्षणदृष्ट्यागुणस्तरसंवर्धनम्, शैक्षिकानुसन्धानदृष्ट्या गुणस्तरसंवर्धनम्, शिक्षणप्रविधिदृष्ट्या गुणस्तरसंवर्धनम्, शैक्षिकप्रौद्योगिकीदृष्ट्या गुणस्तरसंवर्धनम्, शिक्षणाभ्यासप्रशिक्षुतादृष्ट्यागुणस्तर- संवर्धनम् जातं भविष्यति च।

साम्प्रतिके युगे शिक्षा मनोवैज्ञानिकदृष्ट्या शैक्षिकानुन्धानदृष्ट्या च बहुचिन्तनं भवति क्रियते च। नव्येष्वाधुनिकविज्ञानेष्वपि नव्यतममिदं शास्त्रं यन्मनोविज्ञानं नाम। यद्यपि भारतीयशास्त्रेषु मनः अधिकृत्य विचारः कृतः, तथापि स सर्वोऽप्रसङ्गात् कृतो वर्तते। मनः केवलं विषयीकृत्य प्रवृत्तं, मनोविज्ञानं तु आधुनिकं भवति। संस्कृतेतरभाषासु बह्वो ग्रन्था विरचिता मनोनिरूपणाय। संस्कृतेऽपि वर्तन्ते सामान्यमनोविज्ञानप्रतिपादनपरा द्वित्राः ग्रन्थाः। शिक्षामनोविज्ञाने ये बुद्धेरसाधारणधर्माः केचन वर्ण्यन्ते तान् धर्मान् संस्कृतशिक्षकप्रशिक्षकः आत्मसात्कृत्वा संस्कृते शिक्षायां गुणस्तरसंवर्धनं कर्तुम् अर्हति यथा-

**1. जाग्रता अथवा स्फूर्तिः (Alertness)** - संस्कृतशिक्षकप्रशिक्षकः सदा परितः स्थितं सर्वं विषयं जानीयात्। बा'यं प्रेरकं प्रति सर्वदा जागरकः स्यात्। इन्द्रियाणि तस्य अप्रतिहतानि वर्तेरन्। येषां जाग्रता न वर्तते ते परैः सकृदुक्तं नावगच्छन्तिए पुनरपि तदेव कथितं वाञ्छन्ति।

**2. धारणम् आत्मीयताकरणं च (Retention and assimilation)** - संस्कृतशिक्षकशिक्षायां गुणस्तरसंवर्धानाय संस्कृतशिक्षकप्रशिक्षक स्पष्टेनापि संस्कारेण परं मनसि अधृतेन आत्मीयतामप्रापितेन अनुभवजन्यं ज्ञानं न प्राप्नुयात्। धारणमपि बुद्धिकार्यमेव। धारणशक्त्यैव बुद्धिमन्तः सर्वत्र जयं विन्दन्ति। यथा भुक्तम् अन्नं जीर्णं सत् शरीरं पोषयति बलं चोत्पादयति एवमेव लब्धं ज्ञानमपि यदि संस्कृताध्यापकेन स्वकीयत्वमापाद्यते तर्हि एव तत् फलदायि भवेत्। स्वकीयत्वबुद्धिरेवात्मप्रत्ययं जनयति। अनेन आत्मप्रत्ययेन शिक्षणस्तरं गुणवत्तापूर्णं भवति।

**3. भावानां प्रयोगः (Manipulation of ideas)** - सङ्कटकाले चतुरया कल्पनाशक्त्या त्वरिततरान् भावान् उपयुज्य कार्यकरणमपि बुद्धिधर्मः। केचित् अतर्कितोपमतायाम् आपदिए समुद्रे निमग्ना इव शोचन्ति।

संस्कृतशिक्षकप्रशिक्षकः नैव शोचेत् । बहून् परिहारोपायान् मनसि सन्तोल्योचितमुपायं सद्यो गृ'णीयात् । प्रतिदिनं क्रियमाणेष्वपि कार्येषु किं लघुः कश्चन मार्गो वर्तत इति विचिन्तयेत् । पाकादिष्वपि नूतनप्रक्रियाः बुद्धिमन्तः एव पश्यन्ति । चिरं अनादिसिद्धया एकयैव प्रक्रियया कृते कृषिकर्मणि इदानीं नूतनपद्धतिराविष्क्रियते ।

**4. अन्तर्दृष्टिः (Insight)** - संस्कृताध्यापकः उपायचिन्तनाय बहुं कालं न व्ययीकुर्यात्। अनुचितमुपायमनुष्ठाय क्लेशमपि न प्राप्नुयात् । अनेन गुणस्तरसवर्धनं न सम्भवति । अस्य कार्यस्य अयमेवोपायः इति सन्दर्भानुगुणं सहसा विचिन्त्य अन्तः प्रज्ञया जानीयात् । अन्तर्दृष्ट्या संस्कृताध्यापकः युक्तिपूर्णः भवति ।

**5. स्वकार्यतोलनम् (Self-criticism)** - संस्कृतशिक्षायां गुणस्तरसंवर्धनाय संस्कृताध्यापकः स्वकृतकार्यस्य गुणं दोषं वा स्वयमेव जानीयात् । मन्दमतिस्तु स्वकार्येणाल्पेनापि तुष्येत् । पराङ्गीकाराय परमुखं ईक्षेत । परैः दोषोद्घाटने कृते विषीदेत् कुप्येद्वा । संस्कृताध्यापकः एवं न स्यात् । अत एव रामः ''स्वदोषपरदोषवित्'' इति स्तूयते वाल्मीकिना । विद्वान् विपश्चित् दोषज्ञः इति अमरकारेण आत्मदोषज्ञत्वं पण्डितलक्षणमुक्तम् ।

**6. आत्मप्रत्ययः (Self-confidence)** - संस्कृताध्यापकः निराबाधं आत्मना तदा-तदा कृतानि कर्माणि दृष्ट्वा आत्मनि प्रत्ययं कुर्यात् । केचन मन्दमतयः किमप्यकृतवन्तोऽपि आत्मप्रत्ययं वहन्ति । केषांचित् सर्वदा आत्मप्रत्ययः नैव भवति । एते सदा परकृतं साहाय्यमपेक्षन्ते । युक्तः आत्मप्रत्ययः बुद्धेः असाधारणो धर्मो भवति । अनेन संस्कृताध्यापकानां गुणस्तरं अभिजानाति ।

**7. स्थिरमुद्देश्यम् (Strong-motivation )** - संस्कृतशिक्षक जीवने यत् यत् स्वप्राप्यं चिन्तयति तत्र स्थिरां बुद्धिं कुर्यात् । पतघ्नग्रहणाय प्रवृत्ताः बालाः यथा पूर्वानुद्रुतं पतघ्नं विहाय अन्यमन्यमनुधावन्ति एवं मन्दमतयः स्वोद्देश्यं प्रतिदिनं परिवर्तयन्ति । संस्कृतशिक्षकः स्थिरं किमपि विचिन्त्य तत्प्राप्त्यै प्रयतेत आफलोदयकर्मा स्यात् । कार्येषु स्थिरभिरूचिः भवेत् । अनेन विद्वान् दीर्घकालं कर्तुं प्रभवति ।

**8. संवेगानुपहतिः (Not being affected by Emotion)** - संस्कृतशिक्षकशिक्षायां गुणस्तरसंवर्धनाय संस्कृतशिक्षकप्रशिक्षकः संवेगवंशवदो न भवेत्। तस्य बुद्धिरचञ्चला स्यात् । ''ननु प्रवातेक्ष्प्यप्रकम्प्याः गिरयः'' इति वदन् कालिदासः शोकानुपहतत्त्वं प्रशंसति।

**''शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।**
**ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः''।। इति।**

अनुसन्धानदृष्ट्या संस्कृतशिक्षकशिक्षायां गुणस्तरसंवर्धनाय अस्माभिः "Report to unesco of the international commission on Education for the twenty-first century-Learning : The Treasure Within" अस्य अध्ययनं कर्त्तव्यम् । अत्र ये अध्यायाः सन्ति-

तेषु -

1. From the local community to a world society .
2. From social cohesion to democratic participation.
3. From economic growth to human development.
4. The four pillars of Education.

5. Learning throughout life.
6. From basic Education to university.
7. Teachers in search of new perspectives.
8. Choices for Education : the political factor.
9. International co-operation : Educating the global village.

अत्र चतुर्थेऽध्याये -

1. Learning to know (P.No. 86 )
2. Learning to do (P.No. 88 )
3. Learning to live together, Learning to live with others (P.No. 91 )
4. Learning to be (P.No. 94 )

सर्वैः संस्कृतशिक्षकप्रशिक्षकैः दृश्टृव्यम्, पठितव्यम्। जानन्ति केचन प्रसङ्गेऽस्मिन्।

यदि वयं अस्य अन्ताराष्ट्रियक्ष्क्ष्योगस्य स्वाध्यायधिगमं विधाय संस्कृतशिक्षणे प्रयोगं कर्तुं शक्नुमः। अत्र नैकाः विद्वासः अस्मान् विभिन्नोपायात् शिक्षणस्तरं उन्नेतुंम् बोधितवन्तः।

यस्य कस्यापि राष्ट्रस्य जीवातुभूतं तत्त्वं भवति तदीया संस्कृतिः। Culture is lifeblood of the nation इति उच्यते। भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा। संस्कृतिः संस्कृताश्रिता इति वचनानुसारं संस्कृतं नाम भारतस्य सांस्कृतिको दायःए तदीयं पैतृकं रिक्थमिति परिण्गयते सर्वैः प्राच्य-प्रतीच्यविद्वद्भिः।

यथा जवहारलालनेहरुः अभिप्रैति -

If I was asked what is the greatest treasure which India possessed and what is her finest heritage, I would answer unhesitatingly, it is Sanskrit Language and its literature and all that contains. This is a magnificent inheritance and so long as this endures and influence the life of our people, so long the basic genius of India will continue (of Nehru)

अत्र विश्वविश्रुतः विदेशी विद्वान् Sir William James वदति - The Sanskrit language, whatever be its antiquity, is of wonderful structure. More perfect than the Greek more copious than the Latin but more equitably refined than the either. (Inauguration Asiatic Society of India in 1786)

किं नाम संस्कृतम्? संस्कृतं नाम राराज्यमाना भाषा सत्यम्, संस्कृतं नाम विश्ववाङ्मये अतिप्राचीनं समृद्धिसम्पन्नं साहित्यम्। आम्, संस्कृतं नाम ज्ञानविज्ञानस्याकरभूतं विश्वकोशायमानं रत्नमञ्जूषायमानं शास्त्रवाङ्मयम्।

संस्कृतस्येदं मुखत्रयम् (3 Dimensions) तदीयमध्यापनमनुशीलनं वा कथं कार्यमिति प्रकृतो विषयः। यस्य कस्यापि विषयानुशीलने त्रयः अंशा विचारणामर्हन्ति। ते च - विषयः अथवा प्रमेयः (what) प्रयोजनं कीदृशं वा (why) पद्धतिः अथवा प्रमाणं वा (How) इति प्रकृतसन्दर्भे संस्कृतं नाम भाषा वा उत साहित्यमुत शास्त्रम्? वस्तुतः संस्कृतविधाया इमान्यङ्गानि परस्परसम्बद्धानि पूरकानि च। वागर्थाविव संपृक्तानि तानि। स्तरानुगुणं तत्र प्रमाणभेद एव।

का नाम भाषा ? भाष्यति इति व्युत्पत्तया भाषमाणत्वेन भाषायाः प्रथमं रूपम् । आङ्गलेय्यामपि "Tongue" इति पदं Mother Tongue, other tongue इत्यादिपदानि भाषाया वाचिकरूपस्यैव प्राधान्यं निर्दिशन्ति । भगवता पाणिनिना अष्टाध्याय्यां तत्र तत्र **''भाषायां छन्दसि''** इति निदेशः कृतो वर्तते । तत्रभवान् पतञ्जलिरपि **''वैदिकानां लौकिकानां शब्दानामनुशासनम्''** इति वदन् संस्कृतवाण्या लोकव्यवहारसिद्धत्वं प्रतिपादयति । एवमेव नागेशः कैयटव्याख्याने भाषा नाम **''प्रयोज्यप्रयोजकव्यवहारः''** इति निर्दिशति। इति प्रयुक्तानामिदमन्वाख्यानमिति वदन्तः संस्कृतवैयाकरणाः, लोकप्रयुक्तशब्दाः एव व्याकरणस्यावलम्बनमिति ज्ञापयन्तो भाषितसंस्कृतस्यैव विश्लेषणं कुर्वन्तीति न तिरोहितं विदुषाम् ।

किं नाम अध्यायपनम्? छात्रं प्रति विषयसम्प्रेषणं सङ्क्रामणं वा । नायमेकगामी मार्गः अपि तु उभयगामी (Two way traffic and not one way) । सम्यगेवोक्तं उपनिषदि **''आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपम्, विद्यासन्धिः प्रवचनं सन्धानम्''।** अनुबन्धचतुष्टयमिति तन्नात्र विषयः। अधिकारिप्रयोजनसम्बन्धाः इति शास्त्रे यदुच्यते तदत्रापि संस्कृतशिक्षणेऽन्वेति । विविधस्तरेषु विद्यालयेषु प्राथमिकस्तरे उच्चस्तरे वा महाविद्यालयेषु वा किं भाषाध्ययनम् अथवा साहित्याध्ययनम् अथवा शास्त्रध्ययनम् ? वस्तुतः कः स्यात् संस्कृतपण्डितः ? संस्कृताध्यापके कीदृशी योग्यता अपेक्षिता ? स भाषाप्रयोग निपुणो भवेत् वा ? साहित्यविमर्शनविचक्षणो वा ? शास्त्रे शास्त्रेषु वा व्युत्पन्नो वा ? वस्तुतः अस्मन्मते सामान्यभाषणकौशलं साहित्यादि-रसास्वादनशक्तिः, सामान्यतया शास्त्रे व्युत्पत्तिः अथवा सामान्यपरिचयो वा इति एम्-ए- (संस्कृतं) अथवा आचार्य इति उपाधिधारिषु संस्कृतपण्डितेषु त्रयाणामप्यंशानां, सामान्यावगतिः आवश्यकी एव । शास्त्रकक्ष्यायां आचार्यत्तरस्तरे (Post M.A.) महाभाष्यं, परिभाषेन्दुशेखरः खण्डनखण्डखाद्यम् इत्यादीनां मूलग्रन्थानामध्ययनं शास्त्रे च निर्दुष्टं पाण्डित्यार्जनमपेक्षितं स्यात्। न तु सर्वेषां पण्डितानां कृते। प्रकृते सामान्यपण्डितानां विषये विचारः क्रियते ।

1 छात्रणां कुतूहलजागरणं (Arising Curiosity) तथा तेषां अभिप्रेरणम् ।

2 भिन्नप्रवृत्तियोग्यताभाजां कृतेक्ष्पि विपुलावकाशाः ।

3 संस्कृतभाषामर्यादावर्धनम् ।

4 बालकेन्द्रितशिक्षणतत्वानुष्ठानम् ।

समासतः एवं वक्तुं शक्यते यत् गीवार्णभारत्यां भाषणकौशलसम्पादनेन तद्गतविशालवाङ्मये कियद्भाववैविध्यं, कियान् रसप्रकर्षः, कियद्वर्णमाधुर्यम्, कियान् पदवाक्यपाकः, कियद्वा रीतिवैचित्र्यमस्तीति ज्ञायते। टीकाग्रन्थवाचने उत्तरोत्तरं कुतूहलमुत्पाद्य छात्रान् स्वयमेव अर्थनिर्धारणक्षमान्, पूर्वतनशास्त्रिशिष्यानिव विदधाति खण्डान्वयपद्धतिरियमित्यनुभवैकगम्योऽयं विषयः । वस्तुतः प्रारम्भिकस्तरेषु इयं पद्धतिः संवादपद्धतिप्रश्नोत्तरपद्धतिनाम्ना अवतरति । अनन्तरं प्रौढच्छात्रस्तरेषु काव्याध्यापने शास्त्रध्यापने च इयं पद्धतिः खण्डान्वयपद्धतिः अथवा आकाङ्क्षापद्धतिः इति नाम्ना प्रथते । व्याख्यानैकप्रधाना कथपरिपाटिः सर्वथा त्याज्या इति न । इतरपद्धतीनां ग्राह्यांशास्सर्वे यथायोग्यं यथाप्रसङ्गमनुष्ठेयाः । तासां शोभनसमन्वयः कार्यः यया इयं पद्धतिः सर्वसारग्राहिणी (Electric Method) रूपेण पर्यवस्येत् । रामस्येकपत्नीव्रतत्ववत् नास्माभिः एकान्ततया

एकप्रणालीवर्तिभिर्भाव्यम्। प्राचीनकालादारभ्य पातञ्जलशाबरादिभाष्यशैल्यनुरोधेन परिवृद्धिङ्गता इयं प्रश्नोत्तरपद्धतिः खण्डान्वयरूपेण उत्तरोत्तरं टीकासु समवतीर्णा । व्यवहारसहकृता एषा प्रतीच्यानां संवादपद्धतेः (Dialogue) सुतरां साधर्म्यमापन्ना बालप्रौढानामध्यापने अद्यत्वेऽपि परमहितकारिणी अनुसरणयोग्या चेति पाश्चात्यविद्वद्वचनोद्धरणेन उपसंहाररूपेण प्रदर्श्यते । ततः पूर्वं कालिदासस्य वचनद्वयं - **''पुराणमित्येव न साधु सर्वमिति । यस्योभयं साधु स शिक्षकाणामिति।''** सुश्रुतस्य - **''यस्तूभयज्ञो मतिमान् समर्थः द्विचक्रस्यंदनो यथा''** इति संस्मरणीयं भवेत् । उपसंह्रियते लघुनिबन्धोऽयमेभिः दीप्तिमत्च्छब्दैः (Sparkling Words) Harold Palmee Redman प्रणीतात् This language learning business ( pp336) इति ग्रन्थादुधृतैः - Question and answer work is most effective of all the language learning exercises ever devised . In its various forms and grades it initiates, develops and utilizes the natural language learning forces with which we are endowed . It is the shortest cut to writing and it may be adopted for purposes so diverse as the teaching of conversation of abstract grammar of composition and pronunciation.

संस्कृतं वर्धतां नित्यं संस्कृतश्रीः समेधताम् ।

**सन्दर्भग्रन्थाः -**


1. संस्कृतशिक्षणम् - डॉ- रामशकलपाण्डेयः ।
2. पुरातनी शिक्षा - प्रो लोकमान्यमिश्रः ।
3. संस्कृतशिक्षणम् - डॉ- कम्भम्पाटि साम्बशिवमूर्तिः ।
4. शिक्षामनोविज्ञान - डॉ- एस्- एस्- माथुर ।
5. शिक्षायाः दार्शनिकाधाराः - डॉ- सोमनाथसाहुः ।
6. संस्कृतशिक्षणसंदर्शिका - डॉ- राधामोहन पुरोहित एवं वासुदेवशास्त्री (सम्पादक) ।
7. भाषाशास्त्र एवं भाषाविज्ञान - डॉ- कपिलदेव द्विवेदी ।
8. काव्यप्रकाशः - मम्मटाचार्यः ।
9. संस्कृतशिक्षणम् - डॉ- उदयशंकर झा ।
10. राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतितः प्रकाशिताः पत्रिकाः ।



*सहायकाचार्यः, शिक्षाशास्त्रविद्याशाखाः*

*केन्द्रियसंस्कृतविश्वविद्यालयः जयपुरपरिसरः।*

# एकविंशशताब्द्यां उच्चशिक्षायाः प्रत्याह्वानानि भविष्योन्मुखी दृष्टिः शिक्षा च

डॉ. विजयकुमारदाधीचः



**शोधसारांशः -**

प्राचीनकालादारभ्य वर्तमानकालपर्यन्तम् उच्चशिक्षायाः क्षेत्रे बहु परिवर्तनानि अभवन्। परन्तु अद्यापि अस्मिन् परिष्कारापेक्षा परिलक्ष्यते। 21 तमी शताब्द्याम् उच्चशिक्षायाः समक्षे अनेकानि प्रत्याह्वानानि सन्ति। तेभ्यः संघर्षः अत्यन्तावश्यकः वर्तते। एतत्कृते अस्मान् भविष्यं स्मरणे कृत्वा नियोजिताः शिक्षानीतीः एवं कार्यक्रमान् व्यावहारिकधरातले स्थाप्य कार्यक्रमः दात्तव्यः। एकत्र यत्र उच्चशिक्षायाः वर्धमानावश्यकतायाः पूर्त्यर्थं उच्चशिक्षासंस्थानानां संख्यायां वृद्धिः अपेक्षिता वर्तते तत्रैव अन्यत्र अस्मिन् गुणात्मकसंशोधनस्य एवं अस्याः आवश्यकाधारितनिर्माणस्य आवश्यकता वर्तते। प्रस्तुतलेखेऽस्मिन् उच्चशिक्षायाः प्रत्याह्वानानां प्रतिकारायं भविष्ये भारते उच्चशिक्षास्वरूपे विश्लेषणात्मकटिप्पणी कृता वर्तते।

**कूटशब्दाः -**

प्रत्याह्वानानि, अनुसन्धानम्, नवाचारसंरचना, भविष्योन्मुखी-दृष्टिः।

सभ्यतायाः उद्भवकालात् शिक्षायाः अस्तित्वं प्रवर्तमानं वर्तते। शिक्षाया ः उद्देश्ये **''सा विद्या या विमुक्तये''** इति अर्थात् विद्या मुक्ते मार्गः वर्तते। एतादृशी अवधारणा आसीत्। एषा मानवजीवनस्य प्रमुखमङ्गं वर्तते। शिक्षा मनुष्यस्य जन्मजातशक्तीनां स्वाभाविके सामञ्जस्यपूर्णे च विकासे साहाय्यं करोति। तस्य व्यक्तित्वस्य पूर्णं विकासं करोति। तस्य स्वकीयवातावरणेन सामञ्जस्यस्थापने साहाय्यं करोति। तं जीवननागरिकतयोः कर्त्तव्यदायित्वयोः कृते सिद्धं करोति। तथा तस्य विचारव्यवहारदृष्टिकोणेषु इत्थं परिवर्तयति यत् समाजस्य, देशस्य विश्वस्य कृते च हितकरं भवति।

**एडम्स** महोदयानुसारम् - ''शिक्षा एका एतादृशी सुनियोजिता प्रक्रिया वर्ततेयस्याम् एकस्य व्यक्तित्वस्य विकासाय तदुपरि अपरव्यक्तित्वस्य प्रभावः आयाति।''

व्यापकार्थेषु यदि शिक्षां परिभाषामहे चेत् एषा एका एतादृशी प्रक्रिया वर्तते, या जीवनपर्यन्तं चलति। एषा मात्रं शैक्षणिकसंस्थानेन उत पाठ्यक्रमेण सम्बन्धिता नास्ति अपितु जीवनस्य प्रतिक्षणस्य अनुभवो वर्तते। येन व्यक्तिः अवगच्छति।।

प्राचीनकालादारभ्य अद्यावधि प्रारम्भिक शिक्षायाः उच्चशिक्षायाः विभिन्नेषु विषयेशु विविधशैक्षिक संवादाः आयोज्यमानाः सन्ति। तथा च परिणामस्वरूपाणि अस्मिन् क्षेत्रे क्रान्तिकारपरिवर्तनानि अपि जातानि। अद्य शिक्षायाः क्षेत्रं व्यापकेन सहैव बहुआयामी अपि अभवत्। यदि विशेषरूपेण उच्चशिक्षायाः सन्दर्भे दृष्टिपातः क्रियते चेत् एषा कस्यचित् क्षेत्रस्य एतादृशी कणिका वर्तते यस्याः अभावे कस्मिंश्चित् क्षेत्रे समुचितविकासस्य समीचीनानि सोपानानि

न रचयितुं शक्यन्ते। यद्यपि स्वतन्त्रतायाः प्राप्तेः अनन्तरं सर्वकारैः शिक्षाविदैः शैक्षिकप्रशासकैः नीतिनिर्मातृभिः एवं शैक्षिकबुद्धिजीविभिश्चः एतारु विकीर्णमानाः कारिकाः सरलीकर्तुं बहवः प्रयासाः क्रियमाणाः सन्ति। परन्तु अद्यापि परिष्कारावसरः वर्तते। राष्ट्रिया शिक्षानीतिः 1978 इत्यस्याः अनुच्छेदेषु इदमुक्तम्। यत् -

"शिक्षा इदानीं भारतदेशे चतुष्पथे स्थिता वर्तते। न क्षैतीज विस्तारः न तु परिष्कारस्य वर्तमानगतः प्रकृते स्थितेः च अपेक्षानुया वर्तते। 24 वर्षेषु व्यतीतेष्वपि उपर्युक्तं वाक्यम् अद्यतनीय परिस्थित्यनुगुणं एव वर्तते।"

ज्ञानं 21 तमी शताब्द्याः प्रमुखा प्रेरकशक्तिरूपेण स्वीकृतम्। वैश्विकस्तरे प्रतियोगित्वेन उत्थानस्य कस्यश्चित् देशस्य क्षमता मूलतः ज्ञान संसाधनेषु एव आश्रिता भविष्यति। क्रमिकविकासं प्रोत्साहनार्थं एकं एतादृशं परिवर्तनं अपेक्षितं वर्तते। यत् सम्पूर्ण ज्ञानक्षेत्रस्य समस्यां प्रति ध्यानं दद्यात्। ज्ञानस्य सौलभ्यतायाः वृद्धिः। अनुसन्धानं विकासं नवाचारसंरचनाश्च नूतनरूपप्रदानम्। उत्तमोत्तमाः सेवाः उत्पन्नाय ज्ञानानुप्रयोगानां लाभग्रहणम्।

**"भविष्योन्मुखी दृष्टिः उच्चशिक्षा च"**

इदानीं 21 तमी शताब्द्यां उच्चशिक्षायाः समक्षे अनेकानि प्रत्याह्वानानि सन्ति। तेभ्यः अनिवृत्ताः वयं भाविनीभिः सन्ततीभिः सह न्यायं कर्तुं न शक्नुमः। एवं आगामिन्यः सन्ततयः अस्य कृते अस्मानेव उत्तरदायिनः सिद्धयिष्यति।

अद्य सम्पूर्णे विश्वे शिक्षा् अनिवार्या एवं सशक्तीकरणाय नित्य-प्रति नवीनाः प्रयोगाः भवन्तः सन्ति। शिक्षायाः प्रणाली एवं तस्याः स्वरूपे परिवर्तनानि क्रियमाणानि सन्ति। भूमण्डलीकृते विश्वे विकसितदेशैः च आर्थिकनीतिः दृष्टिगताः कृत्वा शिक्षायाः क्षेत्रे अनेकानि मानकरूपाणि स्थापितानि। परन्तु वैश्विकप्रतिस्पर्धायाः पृथक् अद्यावधिः पर्यन्तं बहु प्रयासान्तरं अपि अस्माकं भारतीया शिक्षा विशेषरूपेण उच्चशिक्षा तत्स्थानं न प्राप्तवती, यदद्य अपेक्षितं वर्तते। भारतीया उच्चशिक्षायाः प्रत्याह्वानानां समाधानोद्देश्येन बहुशः चर्चा भवति। यत् शिक्षायाः क्षेत्रे नूतनानां विचाराणां क्रियान्वयनस्य उत विचाराणां स्तरे जायमानानि परिवर्तनानि यथार्थरूपेण शैक्षिकसंस्थानेषु दृष्टिगोचराय तत्र मात्रं एकैव माध्यमं श्रवणपथमायाति, यत् शैक्षिकसंवादानां, ख् संगोष्ठीनां परिसम्वादानां आयोजनं स्यात्। परन्तु परिवर्तनं कुत्रापि दृष्टिगोचरं आयाति। कस्यांश्चित् एकैव प्रकारिकाख्यां व्यवस्थायां तिष्ठन् तथा पुरातनपरम्परायां चलन् एका जडत्वस्य स्थितिः आगच्छति। यस्याः वयं बहिः आगन्तुं न इच्छामः। परिवर्तनरूपी वायुः प्रवहति, बाह्यबलत्वेन नूतन-नूतन विचाराः प्रयत्नं कुर्वन्ति। एतस्मात् जडत्वात् मुक्तेः परन्तु एषः व्यवस्थायाः दोषः वदामः उत अभिप्रेरणायाः अभावः यत् परम्परायाः पृथक् नूतन-सृजनकार्यं प्रभावयति। भारते उच्चशिक्षायाः इतिहासः अतिप्राचीनः वर्तते। वैदिककालादारभ्य मुगलकालपर्यन्तं राजपदधारकैः शिक्षा एकं विशिष्टवर्गं यावत् संकुश्चितं कृता आसीत्। औपनिवेशिके काले आधुनिकशिक्षायाः प्रयासान्तर्गत 1857 तमे वर्षे बम्बई कलकत्ता एवं मद्रास नगरे विश्वविद्यालयाः स्थापिताः कृताः। स्वतन्त्रतायाः समयं यावत् भारते विश्वविद्यालयानां आहत्य विंशतिः (20) तथा महाविद्यालयानां पञ्चशतं (50) संख्या आसीत्। अद्य एषा संख्या वर्द्धमाना जाता यस्याः आनुमानिकं स्वरूपं एवं प्रकारकं वर्तते। राष्ट्रियमहत्त्वस्य संस्थानानां संख्यामाहत्य विश्वविद्यालयानां संख्या सप्तषष्ठ्योत्तरत्रिंशतम् (367) तथा महाविद्यालयानां संख्या चतुषष्ठयोत्तर अष्टदशसहस्रं (18064) वर्तते। येषु आहत्य नामङ्कनानि सम्भवतः दशलक्षोत्तर एककोटिः (1.10) वर्तन्ते। दूरस्थ शिक्षाप्रणाल्यान्तर्गतानां स्थापितानां

पचमहिलाविश्वविद्यालयैः सह मुक्तविश्वविद्यालयानां संख्या एकादश वर्तते। उच्चशिक्षायां नामाङ्कन वृद्धिदरः 6.7 प्रतिशत वर्तते। विधिसंस्थानानां संख्या पञ्चाशतोत्तरसप्तशतम् (50) वर्तते। येषु आहत्य षट्त्रिंशत्सहस्रोत्तरत्रिलक्षं (3.36) वर्तते। चिकित्साशिक्षायाः द्विनवतित्युत्तरद्विसहस्रं संस्थानानि सन्ति। येषं त्रिलक्ष अष्टचत्वारिंशतसहस्र चतुश्शतपञ्चाशीति (38448) नामाङ्कानि सन्ति। अभियान्त्रिकस्यद्वादशोत्तरपचशशतं (1512) संस्थानानि वर्तन्ते। येषु सम्पूर्णमिलित्वा सप्तलक्षपञ्चनवतिः (7.95) नामाङ्कानि वर्तन्ते। देशे प्रबन्धनस्य एकादशशतम् (1100) संस्थानानि वर्तन्ते, तेषां नामाङ्कनक्षमता द्विनवतिसहस्रं वर्तते। उच्चशिक्षायाः क्षेत्रे कार्यरतानां अध्यापकानां संख्या चतुः लक्ष अष्टाशीतिसहस्रं (4.88) वर्तते। तत्रैव छात्राध्यापकयोः अनुपातः (18.1) वर्तते। स्वतन्त्रतायाः प्राप्तेरनन्तरम् अद्यावधि पर्यन्तं उच्चशिक्षायाः क्षेत्रे यद्यपि उल्लेखनीयाः परिष्काराः जाताः, परन्तु एतदेव सत्यं वर्तते यत् भारते शिक्षायाः कथा कथनीकरणी इत्यनयोः मध्ये कामनाकर्मणोः मध्ये प्रयासपरिणामयोर्मध्ये बहु।

**''उच्चशिक्षायाः स्वरूपं कीदृशं स्यात्?''**

21 तमी शताब्द्यां उच्चशिक्षायाः प्रत्याह्वानैः संघर्षाय अस्मान् भविष्यं दृष्टिपथं कृत्वा नियोजिताः शिक्षानितिः एवं अन्यान् कार्यक्रमान् व्यावहारिकै धरातले कृत्वा कार्यरूपेण स्थापनं कर्त्तव्यम्। वयं यस्य प्रकारस्य समाजस्य निर्माणं कर्तुम् इच्छामः तदनुगुणं अस्माकं शिक्षाप्रणाली अपि स्यात्। एवं वक्तुं शक्यते यत् स एव देशः जीवितो भवितुं शक्यते, यस्य दृष्टिः भविष्ये टंकिता भवति; अस्माकं भावीशिक्षामानवसमाजस्य कृते शिक्षानिर्देशनाय योग्यतमान् नायकान् जन्मदातुं शक्नुयात् एतदेव अस्माकं शिक्षायाः लक्ष्यं भविष्योन्मुखीदृष्टिश्च स्यात्। यद्यपि भारतीयायाः शिक्षायाः महल्लक्ष्यानि वर्तन्ते, परन्तु तेषां साधनानां लघुता अस्ति। एतेषां लक्ष्यानां महानतायाः साधनानां बहुतायाः क्रीड़ा विगतेभ्यः कतिपयपञ्चवर्षीयायोजनाभ्यः दृष्टिपथमायाति। अद्यतनीयायां उच्चशिक्षायां मौलिकपरिष्काराणां नितान्त आवश्यकतां वयं निषेधयितुं न शक्नुमः।

अस्माकं शिक्षाव्यवस्था इमं परिष्कारं तु अनुभवति परन्तु अस्माकं गतिविधयः प्रभावपूर्णाः कथं न भवितुं शक्नुवन्ति। एतद् शोधस्य विषयः वर्तते। एकः एतादृशः समयः यदा शिक्षा केवलम् उत्तमसामाजिकन्यायस्यैव वार्ता नास्ति अपितु आर्थिक विकासस्य कृते एवं सम्पदासृजनाय महत्त्वपूर्णा अभवत्। वयं विलम्ब्य स्थगनस्य असमञ्जस्य च स्थितिं यथावत् न स्थातुं शक्नुमः। परिस्थितेः आवश्यकता वर्तते स्पष्ट दिशानिर्देशस्य संकल्पयुक्त कार्यस्य च। विगतेषु दशकेशु उच्चशिक्षायाः क्षेत्रे एकं स्वाभावकं परिवर्तनं जातं यत् शिक्षायाः आवश्यकता या सर्वदा आसीत्, सा इदानीं आकांक्षात्वेन परिवर्तिता जाता। अस्यां प्रक्रियायां सा भौतिकसामग्र्याः इव भूत्वा अभवत्, परन्तु प्रायः एतदृश्यते यत् इमां उपलब्धकारयितुं उत्तरदायित्वं अस्ति। तत् केवलं कृत्रिम स्वरूप आवेदनविषयवस्त्वोः एवं संकुञ्चितं जातम्। अद्य जनसामान्यस्याकांक्षा वर्तते, यत् उच्चशिक्षाया उपलब्धता सहजा एवं गुणवत्तोत्तमा स्यात्। अधुना भारतस्य एकः वर्गः विश्वस्य सुशिक्षितस्य व्यक्तेः उत्तमः अस्ति, परन्तु मध्यमनिम्नवर्गयोः च जनाः एवं द्रुतगत्या आधुनिकजायमानात् विश्वस्मात् पृष्ठे वर्तन्ते। इदानीं महत्त्वपूर्णं कार्यं वर्तते यत् समाजे एतादृशीं क्षमतां उत्पद्येत, यया सहाय्येन शिक्षाप्रक्रियायां परिकारमानेतुं शक्नुयात्। अस्माभिः दृष्टव्यम् यत् शिक्षाव्यवस्थया समाजे विषमता न वर्द्धेत।

## ‘‘भविष्येन्मुखीदृष्टिकोणस्य एवम् उच्चशिक्षायाः सन्दर्भे बिन्दुशः चर्चा’’

उच्चशिक्षायाः वर्द्धमानायाः आकांक्षायाः पूर्त्तये अधुना शैक्षिकसंस्थासु वृद्धेः आवश्यकता वर्तते यद्यपि स्वतन्त्रताप्राप्तेरनन्तरं शासकीयानां अशासकीयानां च उच्चशैक्षिकसंस्थानानां संरचनायाः तथा नामाङ्कनस्य अनुपाते पर्याप्ता वृद्धिः जाता, परन्तु मानवीयकौशलस्य एवं व्यवसायाधारितानां अंकपत्राणां कारणात् शैक्षिकावसराणां आवश्यकतापूर्त्तये एतद् अपर्याप्तम्। एतद्दृष्ट्या वैदेशिकानां विश्वविद्यालयानां एवं नैजानां विश्वविद्यालयानां आगमनस्य एवं स्थापनया स्वीकृतिं प्रदाय भारतस्य विविधक्षेत्रेषु तेषां प्रसाराय व्यवस्थापनम् कर्त्तव्यम्।

भारतीयउच्चशिक्षायाः नीतीनां एवं कार्ययोजनायाः अन्तर्गते वृहत्तरावृद्धिः, समानवृद्धिः, गुणवत्ताश्रेष्ठताश्च, प्रासङ्गिकता, मूल्याधारिताशिक्षा, सदृशानि पञ्चलक्ष्यानि सम्मिलितानि सन्ति। भविष्यस्य प्रत्याह्वानैः संघर्षकरणाय, मानवयोग्यतायाः वृद्धये, विद्यार्थिनः सर्जनात्मकाः एवं परिवर्तनकारिणश्च निर्माणाय उच्चशिक्षायाः गुणवत्तायां परिष्कारः अपेक्षितः वर्तते।

शैक्षिक संस्थानानां गुणवत्तायाः स्तरे एव शैक्षिकोत्कर्षस्य उद्देश्यं सुनिश्चितं भवति, अर्थात् शैक्षिक उपभोक्तृणानां यथा विद्यार्थीनां अभिभावकसमुदायस्य, नियोक्तुः आदीनां पूर्णसन्तुष्टेः स्वरूपमेव शैक्षिकसंस्थानानां गुणवत्तायाः द्योतकं वर्तते। शैक्षिकोत्पादानां उत्कृष्टतैव राष्ट्रस्य अन्योत्पादानां उत्कृष्टतायाः आधारभूतः घटकः वर्तते। अतः राष्ट्रस्य शैक्षिकव्ययं ‘‘निवेशस्य’’ संज्ञा अदत्त।

प्रो. ब्लाक मार्क महोदयेन स्वकीय पुस्तके लिखितम् यत् शिक्षायाः क्षेत्रे प्रयुक्तं धनं राष्ट्राय बहुआयामी प्रतिपफलं प्रदेति। शिक्षायां सम्पूर्णगुणवत्ता प्रबन्धनस्य अवधारणायाः प्रचलनं वर्द्धितम्। अद्य तदेव शिक्षणसंस्थानं सार्थकं प्रासङ्गिकं च वर्तते, यत् तथ्यात्मकानां प्रतयाह्वानानां सामुख्यं अपेक्षाः पूरयित्वा तेभ्यः स्वकीयाभिः सेवाभिः उच्चस्तरीयं सन्तोषं प्रदानं करोति। गुणवत्ताप्रबन्धनस्य प्रक्रियायां गुणवत्तासुनिश्चितकरणं एकं प्रमुखं सोपानं एवं तथ्यपरकं कार्यं भवति यस्मिन् चलित्वैव शिक्षायां सम्पूर्ण गुणवत्ताप्रबन्धनस्य धारणां साकारं रूपं दातुं शक्नुवन्ति। एतस्मात् उद्देश्यात् शैक्षिकसेवाक्षेत्रे गुणवत्तसुनिश्चितिकरणस्य आवश्यकानां वैधानिकानां संसाधनानां स्थापना कृता। उदाहरणार्थ - भारते उच्चशिक्षायाः गुणवत्तायाः दृष्टेः ‘‘राष्ट्रिय मूल्याङ्कन एवं प्रत्यायन परिषद् दूरस्थ-शिक्षायाः दृष्टेः शिक्षापरिषद् प्रौद्योगिकीशिक्षायाः क्षेत्रे ‘‘ए.आई.सी.टी.ई’’ अध्यापकशिक्षायाः क्षेत्रे ‘‘एन.सी.टी.ई.’’ आदीनि अनेकसंस्थानानि उच्चशिक्षायाः नियामकत्वेन वक्तुं शक्यन्ते। एतानि संस्थानानि स्वकीयेन गुणवत्तनियामकेन एवं प्रमाणकर्तृकस्वाभावेन सम्भवतः प्रायः गुणवत्ता सुनिश्चितीकरणं कुर्वन्ति। एतेभ्यः अपरं अन्ताराष्ट्रियस्तरे ‘‘आई.एस.ओ.’’ इति मानकसंस्थानमपि शैक्षिकसंस्थानानां संसाधनीयगुणवत्तायाः सम्बन्धे आश्वासनं प्रदाय गुणवत्तासुनिश्चितीकरणस्य प्रक्रियायै सफलतां प्रदेति। शैक्षिकसंस्थासु गुणवत्तायाः आधारे श्रेणी निर्धारणप्रणात्याः (रैकिंग प्रणाली) विकासो अभवत्। भविष्ये यदि एतैः संसाधनैः वैश्विकायामान् राष्ट्रिया शिक्षानीतिः, क्षेत्रीयान् आयामान् एवं आपणिकी पृष्ठभूमिः मनसि निधाय गुणवत्तासुनिश्चितीकरणस्य अवधारणां स्वीकारं क्रियते। अतः निश्चितरूपेण 21 तमीशताब्द्यां उच्चशिक्षायाः प्रत्याह्वानेषु विजयप्राप्तिः कर्तुं शक्यते। अस्याः अधुना महतीं आवश्यकता अपि वर्तते। एतेन सहैव उच्चशिक्षण संस्थानानि स्वकीय पुष्टेः आश्वासनस्य एवं शिक्षायाः गुणवत्तायाः ‘‘आन्तरिकयन्त्ररचनामपि स्थापनाय प्रेरितव्यानि। बाह्य गुणवत्तायाः निर्धारणं आन्तरिकगुणवत्तायाः आधारे

करणस्यावश्यकता अस्ति। विगतेषु दिनेषु एतासु नियामकसंस्थासु उच्चस्तरीयाः भ्रष्टाचाराः प्रकाशे आगच्छन्तिस्म। भविष्ये एतादृशीसु गतिविधिषु नियन्त्रणाय विशिष्टप्रतिनिधित्वस्य निर्माणं एतासां पारदर्शितांद्रष्टुमुद्देश्येन कर्त्तव्यम्। विश्वविद्यालयेषु महाविद्यालयेषु च परिणामात्मकरूपेण भौतिकविशिष्टताभिः आधारभूतशैक्षिकसंस्थयाभिः, एवं मानवीयसंसाधनैः उच्चस्तरीयं साक्ष्यं मिलति। आवश्यकता वर्तते आधारभूतासु शैक्षिकसंरचनासु एवं मानवीयसंसाधनेषु निवेशं कृत्वा अपेक्षितपरिष्कारस्य। वर्तमानः सर्वकारः अपि उच्चिशिक्षाया प्रत्याह्वानानि स्वीकृत्य शिक्षायाः क्षेत्रे पुरा तुलनायां अधिकाधिकं निवेशं कुर्वन् अस्ति। 10 तमी पञ्चवर्षीयायां योजनायां केन्द्रसर्वकारः सम्पूर्णनिर्धारितधनस्य 7.7 प्रतिशत भागं शिक्षायां व्ययं कृतवान्। तत्रैव एकादशम्यां पञ्चवर्षीयायां योजनायां एषा राशिः 11 प्रतिशत अभवत्। विश्वविद्यालयानुदानायोगस्य सीमा क्षेत्रे अधिकाधिकविश्वविद्यालयानां महाविद्यालयानां निवेशं कृत्वा तान् आधारभूताः संस्थाः यथा सूचना एवं सम्प्रेषण प्रौद्योगिकीं महत्त्व प्रदान नीतिः, भवनानां निर्माण, उपकरणानां क्रयम् छात्रावासः, पुस्तकालः दैनिकवस्तूनां उपलब्धता आदीनां व्यवस्थाद्वारा शिक्षायाः गुणवत्तायां निश्चेतुं शक्यते। अस्य कृते विश्वविद्यालयानुदानायोगस्य अनुदान राशिः एवं राजय सर्वकारैः वित्तीय सहायता।

उच्चशिक्षायाः क्षेत्रे शिक्षणम् एव दक्षतासंवर्धनाय व्यापकस्तरे वैद्युतकीयानां साधनानाम् उपयोगवर्द्धनं आवश्यकं वर्तते।

सूचना सम्प्रेषण प्रोद्योगिकी स्थानकालसमयानां बन्धनानि उच्छेद्य अत्यन्तद्रुतगत्या अस्माकं आवश्यकतानां पूर्तिः कुर्वती अस्ति। दूरभाष, जङ्गमदूरभाष, अन्तर्जालम्, ध्वनिसन्देशः, ई-सन्देशः, प्राक्षेपित उपग्रहः दूरदर्शनं इत्यादीनाम् उपयोगेन भूमण्डलीयं परिदृश्यं संकुञ्चितं जातम्। सूचना एवं सम्प्रेषण प्रौद्योगिक्याः उपयोगेन सुदूरवर्तिषु स्थाने अपि स्वकीयां वार्तां सरलतया प्रेषितुं शक्यते। एतासां प्रौद्योगिकीनां प्रयोगः शिक्षायाः सर्वेषु स्तरेषु कर्तुं शक्यते। अन्तर्जालविस्तारः (नेटवर्क) संसाधनानि, अन्तर्जालमाध्यमेन शिक्षणम् लेखानां वैद्युतिकरणम्, मल्टीमीडिया इत्यस्य शोधकेन्द्रम्, तथा दृश्यश्रव्यकेन्द्राणां स्थापनायाः विकासात् एव एतेषां प्रसारात् भारतीयां शिक्षाम् अन्ताराष्ट्रियया प्रणाल्या सम्बद्धा कृत्वा गुणवत्तापूर्णा कर्तुं शक्यते।

*सहायकाचार्यः,*
*शिक्षाशास्त्रविद्याशाखाः*
*केन्द्रीयसंस्कृतविश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*

# प्राकृतभाषायाः समसामयिकता ओडिआभाषासन्दर्भे

**डॉ. प्रभातकुमारदासः**



**प्रवेशवाक् -**

> **आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
> **मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।।**[1]

आत्मा बुद्धया अर्थानां ज्ञानं कृत्वा विवक्षया मनः प्रेरयति । मनः शरीरस्य अग्निशक्तिमुपरि बलं ददाति, ततश्च सा अग्निशक्तिरुदरस्थं वायुं प्रेरयति। सा प्रेरणा मुखादिभिरङ्गसंस्थाभिः विविधवर्णानां संयोजनरूपेण वाचं प्रकटयति, यच् छब्दवागिति जानीमः ।

अतः आत्मा बुद्धि-मनः-अग्नि-वायुभिः यस्य उद्गमो भवति तत् प्रकृतिजन्या वाग् अर्थात् प्राकृतवागिति कथ्यते तथ्यमिदं सर्वे स्वीकुर्वन्ति च। एतद्भिन्ना अन्या काचिद्विवक्षा दीयेत चेत् तर्हिः तत्र एतेषां तथ्यानामुपस्थितिरपरिहार्या एव ।

अतः अत्र प्रतिपाद्यं 'प्राकृतवाङ्मयस्य समसामयिकता' इति कथनमात्रेण संसारस्य समग्रं वाङ्मयं प्राकृतमिति प्रथमदृष्ट्या बोधो जायत एव, एतच्छर्वं प्रकृतेः जातत्वात्। मन्मते तु न केवलं प्रथमदृष्ट्या अपितु अन्तिमदृष्ट्याऽपि तदेवास्ति । अत्र अनुभूयते यत् केवलं भाषाणां संज्ञायै भेदाः परिकल्पिताः सन्तीति।

संज्ञाप्रदानेन परिवारस्य उत्पत्तिरपि भवति, तस्मात् विद्वद्भिः विश्वस्य भाषाः विशेषतया द्वादशपरिवारैः विभज्य तदुपरि स्व-स्वविचारान् व्यक्तीकर्तुं चेष्टाः प्रारभन्त इति। अत्र प्रारम्भशब्दस्य याथार्थ्यमस्ति -यतो वाक्/ वाणी परा-पश्यन्ति-वैखरीरूपेण यद्यपि त्रिधा ज्ञायते तथापि साधारणमानवस्तथा च अद्यतनीयो विद्वत्समाजो बहुशस्तस्याः वैखर्याः लेशांशस्य सम्यग्ज्ञानेऽपि न शक्ताः, उपयुक्ताचरणस्य अभाव एव तत्र कारणम् । तादृशस्य आचरणस्य परिज्ञानस्य अपि च तदनुरूपस्य प्रशिक्षणस्य परमावश्यकताविद्यते ।

उपर्युक्तेषु परिवारेषु प्राकृतभाषायाः सम्बन्धः आदिपरिवारेण (भारोपीय-परिवारेण) सह एवास्ति। सोऽपि परिवाररष्टाभिः उपभाषापरिवारैर्विभक्तः । तत्रापि पञ्चमेनोपपरिवारेण (भारत, ईरानी अथवा आर्यपरिवारेण) सह प्राकृतभाषा सम्बद्धाऽस्ति। एवं तस्यापि तिस्रः शाखाः सन्ति यासु प्राकृतभाषायाः सम्बन्धः साक्षात् भारतीयार्यशाखापरिवारेण सह एवास्ति।

प्राकृतभाषा सम्पूर्णे भारतीयसाहित्ये द्रविता त्वात् एतस्याः वाङ्मयं सुविशालमेवास्ति। यतो मनीषयरामनन्ति प्रकृतिः संस्कृतम्, तत्र भवं तत आगतं वा प्राकृतम्। संस्कृतानन्तरं प्राकृतमधिक्रियते। संस्कृतानन्तरं च प्राकृतस्यानुशासनं सिद्धसाध्यमानभेदसंस्कृतयोनेरेव तस्य लक्षणं न तु देश्यस्य इति ज्ञापनार्थम् ।[2] मार्कण्डेयेनापि मतमेनं समर्थयन्नुक्तं यत् -प्रकृतिः संस्कृतम्। तत्र भवं प्राकृतमुच्यते। दशरूपकस्य टीकाकारो धनिको वदति यत् - प्रकृतेः आगतं प्राकृतम् । प्रकृतिः संस्कृतम्।[3] एतस्य मतस्य पूर्णसमर्थनं कर्पूरमञ्जर्याः टीकाकारेण वासुदेवेन, षड्भाषाचन्द्रिकायाः रचयित्रा लक्ष्मीधरेण, वाग्भटालङ्कारस्य टीकाकारेण सिंहदेवगणिना प्राकृतशब्ददीपिकायाः

रचयित्रा नरसिंहेन, गीतगोविन्दस्य रसिकसर्वस्वटीकायाः कर्त्रा नारायणेन अपि च शाकुन्तलस्य टीकाकारेण शङ्करेण कृतमस्ति । एते सर्वे एकस्वरेण प्राकृतस्य उत्पत्तिस्थलं संस्कृतमिति मणन्ति ।

परन्तु मन्मतानुसारेण तत्र 'प्रकृतिः संस्कृतम्' इति कथनेन एतद् बोध्यते यत्- यतो समाजे भावसम्प्रेषणाय भाषा सहायिका भवति ततो एकस्मिन्नेव समाजे कारकविभक्तीनां भिन्नता न सम्भवति। तस्मादेव कारणादत्र शब्दानां भिन्नतायामपि कारकविभक्त्यादीनां समानताकारणात् अर्थात् संस्कृते कारकविभक्त्यादीनां कृते यो नियमो निर्धारितोऽस्ति तदत्रापि अनुसर्तव्य इति ।

तथापि ध्यातव्यं यत् पूर्वाग्रहशून्यः सन् यदि कश्चिद् एतस्य कथनस्य व्याखां करोति तर्हिः समो वा न्यायोचितव्यवहारो सम्भवति, तदतिरिक्तं तु न न्याय इति मे विश्वासो। मन्मते तु पूर्वकाले पाणिनिना भाषायाः परिसीमनार्थं व्याकरनियमानि प्रतिपादितानीति।

यतो पुरा भाषा अतिस्वच्छन्दतायाः कारणान्नदी इव प्रवहमाना आसीत् । तथा सति समग्रमानवजातेः कल्याणकारिणी सन्ती कथञ्चित् समुद्ररूपा भूत्वा स्वस्य अनन्तरूपस्य कारणाद् बोधपरा न भूयादिति आशंका आपतिता। यथा समुद्रस्य जले तत्त्वानामुचितानुपाताभावकारणात् पेयत्वं नास्ति तथैव भाषायाः बहुस्वाच्छन्द्यकारणादपि च तत्र कारकविभक्त्यादीनां नियमनस्याभावकारणान्न सा व्यवहारयोग्या भवेदिति। ततो उचितव्याख्यायाः स्वेच्छया व्याख्याकारणात् प्राकृतभाषायाः तत्रत्यस्य साहित्यस्य च विषये भिन्ना धारणा परिपालिता अस्ति। एतदतिरिक्तं प्राकृतभाषा अद्यापि भारतस्य सर्वासु भाषासु स्वस्य विस्तृतेः स्थापनायां सफला अस्ति। तथ्यमेनं न कोऽपि खण्डयितुं क्षमो। यदि कोऽपि एतत्कर्तुं प्रभवति तदा तस्य व्यक्तेः मातृभाषायां विद्यमानाः प्राकृतांशाः तं वाधन्ते । एतत्प्रमाणयति यत् प्राकृतभाषा कथं प्रवहमाना अस्तीति ।

**भाषायाः परिचयः -**

केवलं वन्योपजानामाधारेण जीविकोपार्जनं विहाय मनुष्यो यदा कर्षणक्रियामारभते तदा क्रियानुरूपानां शब्दानामुत्पत्तिकारणात् विश्वस्य भाषासु बहुपरिवर्तनं जातम् । अद्यापि एतत्परिलक्ष्यते यत् मानवानां भाषाः आर्थिकपरिवर्तनकारणाद्वा आर्थिक- संकटकारणाद् भवत्येव । अत्र परिलक्ष्यते यत् -सम्प्रति मनुष्याणां गतिविधयः कृत्रिमेन बुद्धिना सर्वाधिक्येन प्रभाविता अस्ति। सैव कृत्रिमबुद्धि मानवमस्तिष्कम् एवं च भाषाव्यवहारकौशलमुपरि सर्वाधिक्येन आधारितो भवत्येव ।[4]

मस्तिष्कस्य स्नायविकं मनोवैज्ञानिकं च विकासमाधारीकृत्य अपि च तमादर्शरूपेण स्वीकृत्य तदाधारेण विविधानि यन्त्राणि निर्मितानि सन्ति । भाषाऽऽधारितकौशलानि खलु सम्प्रति मानवजातेः संगठने प्रधानभूमिकां भजन्ति । तेनैव कारणेन भाषाः नवीनस्वरूपं प्राप्नुवन्ति अपि च तासां भाषाणामर्थतत्त्वं मानवसमाजम् एकसूत्रे बध्नाति। भाषायाः सत्यमेतत् यदि दार्शनिकदृशा वा सामाजिकदृशा वा अन्यदृष्ट्या परिभाषयामः तर्हिः सर्वत्र भाषायाः स्वरूपमेतत् मानवस्य जीवनशैलीं प्रभावयत्येव। किन्त्वत्र ध्यातव्यं यदनेन जनानां जीवनशैली प्रतिदिनं प्रभावितोऽपि तज्जन्यं कथोपकथनं प्रचारो वा लोके न श्रूयते। यतो तद्बोधने ये समाजे मनोरञ्जनस्य साधनानि साहित्यस्याङ्गानि सन्ति तेषां सृजने नवीनरूपाणां प्रयोगं कुत्रापि न प्राप्नुमः। आधुनिकयुगस्य अतिप्रसिद्धनाट्यरूपेण प्रचलिते चलचित्रजगति तस्य सद्रूपस्य प्रयोगं तु न प्राप्नुमः, कदाचित्तस्य असत्प्रयोगेण सामाजिकानामशिक्षावृद्धिं पश्यामः।

भाषा लेखनव्यवस्थायाः प्रतिनिधित्वं न करोति चेत् तर्हिः विकासरोधीरूपेण ज्ञायते अपितु तन्निहितं ज्ञानमपि हेयं भवति। तेन कारणेन समाजे तस्यावहेलनं भवति पश्चात् पतति वा। प्राकृतभाषा अपि स्वतन्त्रलेखनव्यवस्थायारभावादद्य अवहेलिता। लेखनव्यवस्थाकृते तस्याः अन्यभाषाऽऽश्रितत्वं खलु तत्र अन्यत् कारणमस्ति।

**लोकभाषा प्राकृतं च पण्डितभाषा संस्कृतम् -**

भाषा आदौ वाग्व्यवहारे प्राप्यते, यदा बृहज्जनसमूहो तस्याः व्यवहारं करोति तदा संस्कृतौ सा विस्तारं प्राप्नोति। तदा सा काव्य-कवितासु, सिद्धान्तादिषु गृह्यते। लोके बहुत्र प्रयोगकारणाद् विद्वांसस्तस्याः स्वतन्त्रस्वभावादर्थज्ञाने काठिन्यमनुभवन्ति। तदेवानुभवस्तदा व्याकरणं सृजति तेन भाषा सर्वजनबोध्या च सर्वजनप्रयोज्या जायते । ईदृशीं व्यवस्थां विश्वस्य सर्वासु भाषासु प्रायः पश्यामः ।

यथा प्राकृतभाषायाः सन्दर्भे अद्य पश्यामः कदाचित् देववाण्या सह तथैव घटिता। छान्दस्-भाषायाः आश्रयेण यदा स्व-स्वानुभवस्याधारेण ऋषयः रचनाः कुर्वन्तः आसन् तदा तासु रचनासु वैभिन्यमपि परिदृष्टा इति आशास्महे। तस्माद् वैदिकव्याकरणस्योत्पत्तिरिति कल्पयामि। कालान्तरे मानवीये मनो-बुद्धि-विचार-व्यवहारेषु परिवर्तने जाते ऋषिरपि तात्कालिकानां सामाजिकानां भाव-बोधानुरूपं सर्जनं करोति। यथा - वाल्मीकीयं रामायणम् । भाषायां भावानुरूपं एतत्परिवर्तनं तदाप्रभृति अद्यापि मनुष्यान् एकसूत्रेण बध्नाति। अत्र भाषायां परिवर्तनाय यद्यपि बहुप्रयासाः कृताः, विविधभाषाः अपि आविष्कृताः, तथा स्थिते सति कदाचित् मूलभाषायाः आत्यन्तिके विनाशे समुत्पादिते प्राकृतभाषा तत्क्षतिं स्व-स्वभावगुणेनाबिलम्बं पूरयति। तेन संस्कृत-प्राकृतयोः बन्धनदार्ढ्यं प्रकटितं भवति।

तथैव प्राकृतभाषया सह यदा इतरमनोभावपूर्णव्यवहारः जायते तदा संस्कृत-प्राकृतभाषयोः अङ्गाङ्गीकता तं नियन्त्रयतीति पश्यामः । शास्त्रीयभाषात्वात् तथा उच्चवर्गस्य भाषाकारणात् संस्कृतभाषा तावत्कालं लोकभाषापदे स्थिता यावद्राजशासने तस्यारनिवार्यता स्यादिति।

तदैव विभिधस्थानीयाः जनाः नित्यव्यवहारभाषारूपेण स्वच्छन्द-सरलव्यवहारार्थं प्राकृतभाषायाः प्रयोगमादिकालादेव कुर्वन्ति। भिन्नस्थानीयाः जनाः प्राकृतभाषां स्व-स्वभावकारणात् परिवर्त्य व्यवहारं प्रारभन्ते चेत् तस्याः साहित्ये अपि परिवर्तनाङ्काः सुस्पष्टाः जायन्ते। यद्यपि भिन्नस्थानाख्याभिः प्राकृतं बहुसञ्ज्ञकं तथापि प्राकृतनाम्ना तेषु ऐक्यमस्ति। परन्तु प्राकृतस्य विविधगुणकारणात् प्राकृतं नाम्ना व्यस्तमपि अस्ति। भाषारूपेण प्रतिष्ठिता प्राकृतभाषा भारतस्य **'बसुधैवकुटुम्बकं'** भावं धारयन्ती **'इयं निजा वा इयं परा भाषा'** इति भावं न कदापि धारयति। **कालस्य प्रभावेण यथा अद्य समाजे बहुसन्ततिवती जननी अवहेलिता तथैव बहुभाषापोषकवती प्राकृतभाषा अपि अवहेलिता दृश्यते ।**

या खलु प्राकृतभाषा मध्यभारोपीयार्यभाषारूपेण गृहीताऽस्ति सा मूलतः व्यवहारस्य प्रयोगे नीयमाना प्राकृतभाषा नास्ति। इतिहासकाराणां मते प्रायः ई.पू.1000तः ईस्वी500 वर्षस्य मध्ये प्राकृतभाषा लिखितरूपेण प्राप्ता अस्ति। तदेव कारणमस्ति यत् एषा लिखितप्राकृतभाषा संस्कृतभाषायाः परवर्ती अस्ति।

साधारणजनानां व्यवहारकारणात् प्राकृतभाषायाः लेखने विलम्बो जातः । यतो लेखनस्य आदिकाले लेखनक्रिया उच्चवर्गीयानां वा शिष्टजनानां व्यवहारभाषामाध्यमेन अर्थात् संस्कृतभाषामाध्यमेन प्रारब्धा एव ।

प्रारम्भस्यैव विकासो जायते, ततरपरेषामिति। अद्यापि सामाजिकव्यवस्था स्वतः तथैवास्ति यथा उक्तभाषयोः सम्बन्धे दृश्यते । कतिपयवर्षेषु सर्वकारीया पृष्ठपोषकता यद्यपि उक्तभाषाभ्यां सह अपरभाषाणां कृते परिवर्धिता तथापि कदाचित् व्यवहारसाम्यमद्यापि अभावपदे स्थिताऽस्ति ।

**ओडिआभाषायारुद्गमः -**

विकासक्षेत्रभेदेन प्राकृतभाषा मुख्यतया पञ्चधा विभक्ता - 1) महाराष्ट्री, 2) शौरसेनी, 3) मागधी, 4) पैशाची, 5) अर्ध-मागधी। मागधी अपि द्विधा 1- पूर्वी-मागधी 2- पश्चिमी-मागधी आख्याभ्यां विभक्ता। पूर्वी-मागधीप्राकृतात् उद्भूता अपभ्रंशभाषा ओडिआभाषायारुत्पत्तिमूलमिति जानीमः। तस्मादेव कारणात् ओड़िआभाषायां पूर्वी मागधीप्राकृतभाषायाः सर्वाधिकं लक्षणं प्राप्यते।

ओड़िआभाषा प्राकृतभाषारूपेणापि ज्ञाता आसीत्। तेन कारणेन अनेकशः ओडिआकवयस्तां प्राकृतनाम्ना सम्बोधनं कुर्वन्तः सन्ति । यतो तत्र उत्तर-अर्वाचीनयुगो वा आपभ्रंशयुगः (ईसवीय 600 तः ई.1200 तमं यावत्) इत्यस्मिन्काले विभिन्नानां प्रादेशिकप्राकृतभाषाणामुत्पत्तिरभवत् ।

एसा खलु प्राकृतभाषा जनसामान्यस्य भाषा आसीद्यद् व्यवहारे प्रयुक्ता आसीत्। बहवः संस्कृतवैयाकरणारासन् ये संस्कृतभाषायाः मूलं प्राकृतमिति वदन्ति स्म। परन्तु अद्य तेषां तथ्यानां समर्थने तादृशानां वक्तृवृन्दानामभावेन सह तन्मतमपि दुर्बलं जातम्।

ईसायाः षोडशशताब्दीं यावत् ओडिआभाषा प्राकृतभाषानाम्ना ज्ञाता। ओडिआसाहित्ये ओडिआभागवतस्य रचनाकारेण अतिबड़ि-जगन्नाथदासेन तत्र भागवते संस्कृतेतररचनारूपेण यदा तां रचनां पूरयति तदा सः भाषां प्रति स्वान्तःभावानां रोधने अक्षमः लिखति यत् -

**प्राकृत बन्धे भागवत।**
**कहिला दास जगन्नाथ।।**

अत्र प्राकृतबन्धे अर्थात् ओडिआभाषायां क्षत्रीयशैल्यां च जगन्नाथदासोऽत्र भागवतकथां प्रोक्तवान्निति। अनेन ओडिआभाषायाः मूलनाम प्राकृतमासीदिति सूच्यते। यतो प्राकृतं साधारणजनानां भाषा आसीत् तस्मादस्याः प्राकृतनाम अपि यथार्थम् ।

**प्राकृतस्य जीवितत्वम् -** मन्मते सैव भाषा जीविताऽस्ति या स्वां विसर्ज्यापि स्वस्यपरिवर्तिते रूपे भिन्नसंज्ञावती सन्ती समाजनिर्माणे सर्वाग्रे स्थिता। सम्प्रति ओडिआभाषायां या सांस्कृतिकभाषा व्यवह्रीयते सैव ओडिआभाषायाः यथार्थं रूपमिति वक्तुं न पारयामः। यतः पूर्व-मागध्युद्भूतापभ्रंशतः यस्याः ओडिआभाषायारूत्पत्तिर्जाता, सा अपभ्रंशभाषा सम्प्रति अवहेलिता एव।

**ओड़िआभाषया सह संस्कृत-प्राकृतभाषयोः सादृश्यस्य कानिचिदुद्धरणानि -**

| **संस्कृतं** | **प्राकृतं** | **ओडिआ** |
|---|---|---|
| अदस्तात् | चहट्ट | चहठ |
| वृन्तः | वेण्टो | वेण्ट |
| गभीरः | गहीरो | गहीर |

| | | |
|---|---|---|
| मुकुटः | मउडो | मउड़ |
| पल्यङ्कः | पल्लंको | पलङ्क |
| दधि | दहि | दहि |
| श्मशान | मसाणो | मसाणि |
| स्तम्भः | खम्बो | खम्ब |
| शृगालः | सिआलो | सिआल |
| मधु | महु | महु |
| किम् | काइँ | किस |
| वप्ता | वप्पा | वापा |
| भगिनी | बहिणी | भउणी |
| करका | करआ | कुला (पत्थर) |

एवं प्रकारेण कानिचिदुद्धरणानि अत्र मया प्रदत्तानि, परन्तु तथ्यतः पश्यामश्चेत् बहुनि खलु उद्धरणानि सन्ति।

निष्कर्षरूपेण एवं वक्तुं पारयाम यत्- यथा जीवनस्य मार्गे बह्व्यः समस्याः अस्मान् व्यथयन्ति तथैव प्राकृतभाषायाः तथा तस्याः साहित्यरचनायामपि समानस्थितिरस्ति। तत्र वैशिष्ट्यमस्ति यत् यदि शासकः औदार्यं वहति तदा भाषा-साहित्ययोः परिपोषणं सम्बर्धनं वा भवति। परन्तु समाजे विशेषावस्थाऽऽकृतिं विना समुचितसाहित्यस्य उत्पत्तेरभावः प्रायः परिलक्ष्यते। अपि च कदाचित् शासकस्य पिपासा वा व्यक्तिविशेषस्य भावसंग्रहाधिक्यं साहित्यस्य प्रकटने महत्कारणरूपेण प्रकटते। तथापि ईदृशानामवहेलितानां भाषा-साहित्यानां समुत्थाने शासकीयं प्रोत्साहनं परमकारणं भवत्विति जिज्ञासया सम्राट् खारवेल इव तथा सम्राट अशोक इव साम्प्रतिकाः शासकाः आचरन्तु इति आशासे।

**सन्दर्भग्रन्थाः**

1. पाणिनीय शिक्षा
2. सिद्धहैमशब्दानुशासन 8/11-अथ प्राकृतम्
3. धनिककृत दशरूपक टीका, 2/60 व्याख्या
4. भारतीय भाषा लोक सर्वेक्षण (PLSI) - ओडिआ भाषा समूह, खण्ड 22, भाग 3, ISBN 978-81-2506-29-1-2
5. वाल्मीकिकृत रामायण, बालकाण्ड
6. प्राकृतभाषा और साहित्य का आलोचनात्मक इतिहास
7. अतिबड़ि जगन्नाथ दास कृत ओड़िआ भागवत

*पीडीएफ, प्राकृत केन्द्रीयसंस्कृतविश्वविद्यालयः*
*जयपुरपरिसरः जयपुरम्, राजस्थानम्*

# वाक्यपदीये अपादानविमर्शः

**डॉ. सुभाषचन्द्रमीणा**



**सारांशः -**

शब्दशास्त्रविषये व्याकरणे अनेकानि मतानि सन्ति। तत्र भर्तृहरेः मतं किञ्चित् विशिष्टम् । अधिकारेऽस्मिन् अपादानस्य विवेचनं सम्प्राप्तः । भर्तृहरिः विभक्त्यनुक्रमेण सम्प्रदानं विविच्य विश्लेष्य वा अपादानम् आरभते इति तट्टीकाकारौ व्यक्तः । ध्रुवमपायेऽपादानम् ''इत्यत्र पाणिनिसूत्रे ध्रुवम्, अपाये च इति द्वयं संज्ञिदलम् , अपादानम् च संज्ञादलम् । कारकसंज्ञासूत्रेषु ध्रुवत्वात् प्रथमम् अपादानम् संज्ञासूत्रम् सम्प्राप्तम् । अनन्तरम् अध्रुवत्त्वात् तदेतरसंज्ञासूत्राणि । न अपादानस्य अवकाशः । वार्तिकेनापि प्रमाणितम् ' अपादानमुत्तराणि कारकाणि बाधन्ते । अपायो विश्लेषार्थे विभागार्थे वा प्रयुज्यते । भर्तृहरिः त्रिविधम् अपादानम् अङ्गीकृतम् ।

**कूटशब्दाः -**

साधनम (कारकम्), अपायः, ध्रुवम् , अध्रुवम् , चलाचलौ , संरब्ध - उदासीनौ , गतिः, निर्दिष्टविषयं, उपात्तविषयं, अपेक्षितक्रियश्च ।

**प्रस्तावना :**

सर्ववेदपरिषद हीदं व्याकरणशास्त्रमिति महाभाष्यकृद्भिः भाष्ये प्रोक्तम् । व्याकरणशास्त्रस्य दार्शनिकनिदर्शनं कारिकामयवाक्यपदीये विशदीक्रियते भर्तृहरिणा । त्रिकाण्डात्मके वाक्यपदीये तृतीये पदकाण्डे चतुर्दशसमुद्देशाः वर्तन्ते । तत्र क्रमशः जातिसमुद्देशः, द्रव्यसमुद्देशः, सम्बन्धसमुद्देशः, भूयोद्रव्यसमुद्देशः, गुणसमुद्देशः, दिक्समुद्देशः, साधनसमुद्देशः, क्रियासमुद्देशः, कालसमुद्देशः, पुरुषसमुद्देशः, संख्यासमुद्देशः, उपग्रहसमुद्देशः, लिङ्गसमुद्देशः, वृतिसमुद्देशश्चेति विकीर्णा बहवः समुद्देशाः विलसन्ति । तत्र क्रमप्राप्ते सप्तमे साधनसमुद्देशे कर्म - कर्तृ - करण - हेतु - सम्प्रदानापादानाधिकरण - शेषाणामाधिकारा निरूपिताः सन्ति।

समुद्देशस्तु सम्यक्तया वस्तुस्थिते बोधविषयस्य वा कथनम् एव समुद्देशः वर्तते । न्यायमार्गे तु 'नाममात्रेण वस्तुसंकीर्तनमुद्देशः' । इति संकीर्तितम् । अतः अत्र शब्दानुशासनस्य गूढविषयाणां ऋजुतया प्रत्याख्यानमेव उद्देशः इति उचितम् । भर्तृहरिणा चतुर्दशसमुद्देशेषु निहिताः चत्वारः पदार्थाः -दिक् साधन -1 न क्रिया - कालाः इति शक्तिसमूहे ग्रहिताः । दिक् एका शक्तिः वर्तते, एवमेव साधनमपि शक्तिः इत्यत्र न कोऽपि संशयः ।

साधनं नाम कारकं इति पाणिनिना विरचितं 'कारके'[2] इति सूत्रस्य भाष्यव्याख्याने सिद्धम् । पतञ्जलिभर्तृहरिमते साधनशब्दः कारकार्थे प्रयुक्तः, यतोहि क्रियानिष्पत्तौ कर्ताप्रभृतयः साधनानि एव भवन्ति । तात्पर्यं वर्तते यत् क्रियानिष्पत्तेः सामर्थ्य शक्तिः वा यस्मिन् वर्तते तदेव साधनं । पतञ्जलिः 'सप्तमीपञ्चमौ कारकमध्ये' इति सूत्रस्य व्याख्याने साधनं शक्तिपरम् अनुगृह्णाति ॥ बनमाली विस्वालः ब्रवीति - कारकशब्दः तम् सामर्थ्य अथवा ताम् क्षमता दर्शयति यस्मिन् यस्यां वा किमपिवस्तु क्रियासमुत्पादने प्रधानभूमिकां प्रतिपादयति । सा कदाचित् भावनारूपेण अनुभूयते । यद्यपि सा शक्तिः प्रधानतया एकैव कर्तृत्वशक्तिः वर्तते । परञ्च सैव

अवान्तरव्यापारविवक्षया कर्तृ - कर्मादिषड् रूपेषु विभज्यते । एवमेव व्याकरणपरंपरायां षट्कारकाणि स्वीक्रियन्ते। भर्तृहरिरपि इमामेव परम्पराम् अनुसरति । तत्र कर्तृ - कर्मन्- करण - सम्प्रदान - अपादान - अधिकरणानि नाम 3 । एतानि कारकाणि प्रथमा द्वितीया - तृतीया - चतुर्थी - पञ्चमी - सम्बोधनेभ्यः ज्ञायते । तेषां विभक्तीनामर्थोऽपि वाच्यः ।

भर्तृहरिः । सामर्थ्यं साधनम् इति विविच्य स्वौजसमौट ... सूत्रस्थविभक्तिविधानक्रमेण कारकं समारभते। अष्टाध्याय्यां स्वादिविधिविधानं येन क्रमेण उपस्थाप्यते , तेनैवक्रमेण इह वाक्यपदीये कारकाणि विविच्यन्ते ।

वाक्यपदीयस्य साधनसमुद्देशे । 'स्वौजसमौट'[4] इति सूत्रनिर्दिष्टविभक्त्यनुक्रमानुसारेण कर्मादिकारकनिर्देशः प्रतिपादितः । परञ्च अष्टाध्याय्यां । विप्रतिषेधे परं कार्यम् । इति नियमसूत्रेण अनुरुध्य अपादानादिक्रमेण पाणिनिः उक्तः । भाष्येऽपि उक्तं 'अपादानसंज्ञामुत्तराणि कारकाणि बाधन्ते यथा- 'धनुषा विध्यति', 'कंसपात्र्यां भुक्तेत्यादयः'। 'धनुषा विध्यत' इति अपाययुक्तत्वात् । 'ध्रुवमपायेऽपादानम्' इति अपादानसंज्ञा प्राप्नोति , 'साधकतमं करणम्' इति च करणसंज्ञा । सा परा भवति । तत्र विभक्तयः स्वौजसमित्यादयः वर्तन्ते । कारकमभिहितमनभिहितं च भवति । तत्र अभिहितकारकविभक्तिः प्रथमा । सा प्रतिपादकार्थमात्रे एव विधीयते । द्वितीयादयश्च सर्वाः विभक्तयः अनभिहिते कारके भवन्ति । अतो हेतो विप्रतिषेधसूत्रानुसारेण पाणिनिग्रन्थे । 'स्वौजसमौट.' इति द्वितीयादिनिर्देशस्य च विहितस्यापादानादिकारकविशेषनिर्देशस्यानेकप्रक्रमत्वात् एकप्रक्रमत्वात् द्वितीयाद्यर्थानुसारेणेव इह कारकक्रम आरभते ।

विषयेऽस्मिन दार्शनिकानां मध्ये बहवः विप्रतिपत्तयः अनुभूयन्ते । एतेषां विप्रतिपत्तीनां मूलं वाक्यपदीयम्। अतो हेतो वाक्यपदीय अन्वेषणीयम् ।

शोधपत्रस्य विषयः वर्तते "वाक्यपदीये अपादानविमर्शः "। अधिकारेऽस्मिन् अपादानस्य विवेचनं सम्प्राप्तः। भर्तृहरिः विभक्त्यनुक्रमेण सम्प्रदानं विविच्य विश्लेष्य वा अपादनं आरभते इति तट्टीकाकारौ व्यङ्क्तः । "ध्रुवमपायेऽपादानम्"[5] इत्यत्र पाणिनिसूत्रे ध्रुवम्, अपाये च इति द्वयं संज्ञिदलम्, अपादानम् च संज्ञादलम् । कारकसंज्ञासूत्रेषु ध्रुवत्वात् प्रथमं अपादानम् संज्ञासूत्रम् सम्प्राप्तम् । अनन्तरं अध्रुवत्त्वात् तदेतरसंज्ञासूत्राणि । तत्र न अपादानस्य अवकाशः । वार्तिकेनापि प्रमाणितम् अपा अपादानमुत्तराणि कारकाणि बाधन्ते "ध्रुवमपायेऽपादानम्" इति अपादानसंज्ञकसूत्रे यत् विश्लेषजनकक्रियायां यदवधिभूतं अर्थ तस्यापादानसंज्ञा वर्तते । अर्थात् विश्लेषे यः ध्रुवत्वेन निश्चलत्वेन विवक्षितः, तस्य अपादानसंज्ञा भवति । यथा ग्रामात् आगच्छति इत्यत्र ग्रामात् पार्थक्यभावो अपायः वर्तते । अपायो विश्लेषे विभागार्थे वा प्रयुज्यते । आगमनक्रियायां ग्रामस्य ध्रुवत्त्वात् स्थिरत्वात् तस्य अपादानसंज्ञा अभूत् । "अपादाने पञ्चमी[6]" इति विधिसूत्रात् पञ्चमी विभक्तिः प्रयोज्या ।

**अपाये ध्रुवपदस्यार्थः -**

ध्रुवत्वविषये वैयाकरणानां मतभेदः जातः । 'ध्रु' धातुः 'गतिस्थैर्ययोः' इति अर्थद्वये प्रयुक्तः । ध्रुवम् इति अवधिभूतम् । द्वयोः संयुक्तपदार्थयोः एकस्य चलनक्रियायाः विश्लेषस्य स्थितिः जायते । अत्र एतादृशचलनक्रियायां यत् अनाश्रयभूतं तद्ध्रुवत्वम् । भाष्यकारदृशि[7] "ग्रामात् आगच्छति शकटेन" इत्यत्र अपाये शकटस्यापि साधनत्वेन अपादानसंज्ञा प्रसज्येत । अतः शकटस्यापादानत्वविरहे 'ध्रुवम्' इति पदम् अर्हम् ।

भर्तृहरिं प्रमाणरूपेण विचिन्त्य कौण्डभट्टः ध्रुवपदं लक्षयति - "प्रकृतधात्वर्थप्रधानीभूत[8]" त्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वम् इति प्रस्तूय भर्तृहरेः कारिका द्योतयति ।

प्रश्नः समुद्यते यत् गतियुक्तेषु पदार्थेषु अपायः सम्भवति वा न वा ?

भर्तृहरिः ध्रुवपदस्य का गतिः ? इत्यत्र "संयोगिभेदात् भिन्नात्मा, गमिरेव भ्रमिर्यथा इति कारिकातः आरभ्य गतिविना तु अवधिना नापाय इति गम्यते"[9] इति कारिकापर्यन्तम् गतियुक्तध्रुवत्वम् प्रतिपादितम् -अत्र गतियुक्तेष्वपि अपादानं भर्तृहरेरभिमतम् । येन प्रकारेण दिग्विशेषावच्छिन्न यो गमनकर्तुः संयोगो विभागो वा यथा-गमिः अर्थात् गमनम् एव भ्रमणम् इति उच्यते तथैव ध्रुवावधिः अर्थात् ध्रुवमचलमवधिः यस्य सः ध्रुवावधिकः अध्रुवे अर्थात् चले समवेतो गतिविशिष्ट अपाय अस्मिन्शास्त्रे व्यवह्रियते[10]।

अपाये गतिस्थैर्यभावौ तट्टीकाकारौ भाष्यमनुरुध्य विश्लेषयतः यथा गमनक्रिया उत्तरदेशसंयोगो उत्पद्यते तथैव पूर्वदेशविभागोऽपि । अत्र वैशिष्ट्यः वर्तते यत् संयोगो गम् - धातोरर्थः वर्तते । परञ्च विभागो अवाच्योऽपि संयोगानुपपत्या आक्षिप्यते । अतः गम्यर्थसंयोगेन सह साहचर्यात् सामानाधिकरण्यात् विभागेऽपि अवधिः स्वीकृतः। तेन दिग्विशेषावच्छिन्नसंयोगविभागरूपकार्य गमनमेव यथा भ्रमणम् इति व्यपदिश्यते । अपि च गमनग्रहणात् भ्रमणरेचनस्यन्दनादयो स्वीक्रियन्ते । एवम्प्रकारेण ध्रुवमचलमनाश्रितमवधिर्यस्य स तथाभूतः अध्रुवे - चले समवेतः गतिविशेष एव अपायाख्यो बोद्धव्यः । लोके ध्रुवपदं स्थिरार्थे अचलार्थे प्रसिद्धम् । लोकार्थमनमोदनाय एव कात्यायनेन वार्तिकं प्रणीतम् - "गतियुक्तेष्वपादानसंज्ञा न उपपद्यते, अध्रुवत्त्वात् "[11] । धावतो अश्वात् पतितः, गच्छतः, सार्थाद् हीनः, इत्यादौ गतियुक्तेष्वपादानसंशिषु ध्रुवत्त्वस्य स्थिरत्वस्य अभावात् अपादानसंज्ञा न प्रसज्येत। परञ्च शास्त्रदृशा वार्तिकम् पुनः प्रणीतम्- "न वाऽध्रौव्यस्याविवक्षितत्त्वात्"[12]। अर्थात् चलेऽपि अध्रुवस्य अविवक्षया ध्रुवत्वं निश्चितम् ।

तात्पर्यं वर्तते यत् सतोऽप्यविवक्षा स्यात् । यथा अनुदरा कन्या अलोमिका एडका । अत्र लोमोदर्योः भावे अपि तयोः अविवक्षा स्यात् । एवमेव असतः विवक्षा दृश्यते यथा समुद्रः कुण्डिका, विन्ध्यो वर्धितकम् इत्यादौ । अतस्मात् सतोऽपि अध्रौव्यस्याविवक्षितत्त्वेन अश्वसार्थयोः ध्रुवत्वविवक्षया अपादानत्वं स्यात् इति भाष्यानुमोदितं भर्तृहरेर्मतम् ।

**अपादानविषये चलाचलस्थितिः अथवा संरब्धोदासीनभावः -**

शास्त्रे अनुमोदितं ध्रुवं, कूटस्थं निष्क्रियम् द्रव्यस्वभावप्राप्तं यत् ध्रौव्यं तद् ध्रुवमपायेऽपादानम् इति पाणिनिसूत्रे न ग्राह्यः चलनस्य असंसर्गी अत्र ध्रुवपदस्यार्थः स्यात् । अतस्मात् अपाये साध्ये यद् ध्रुवम् अपायेनासंस्पृष्टम् तदपादानम् स्यात् । अतो हेतो 'धावतोऽश्वात् पतितः' इत्यत्र अश्वस्य धावनाश्रयत्वेऽपि पातक्रियायाम् अश्वस्य अकर्तृत्वं वर्तते । पातस्य कर्तृत्वं अश्वनिष्ठवेगे भवति । अतस्मात् अत्र अश्वस्य ध्रुवत्वमस्ति ।

संरब्धोदासीनोभयकर्तृकः सर्वत्र अपायः भवति । 'धावतोऽश्वात् पतति' इत्यत्र पाते अश्व उदासीनः स्यात्। अपायाश्रयस्तु संरब्धः (चलः) अर्थात् (चलः) अर्थात् अश्वनिष्ठवेगवत्तरः । आशुगामित्वमित्यर्थः । अध्रौव्यस्याविवक्षितत्वात् इति वार्तिकेन आशगामित्वमत्र अविवक्षितः । अतस्मात् अश्वस्यापादानत्वं सिद्धम् ।

अन्यत्रापि हरिकारिका इति नाम्ना प्रस्तुतोऽयं विषय :

''अपाये यदुदासीनं चलं वा यदिवाश्चलम्। ध्रुवमेवातदावेशात् तदपादानमुच्यते''[13]।

भावार्थः वर्तते, अचलं यदि वा चलं यत् कारकं अपाये अर्थात् विश्लेषहेतुक्रियायाम् उदासीनम् अर्थात् अनाश्रयत्वेन तिष्ठति, तद् क्रियानाश्रयत्वात् ध्रुवम् , अतः तद्पादानमिष्यते। कौण्डभट्टः ध्रुवस्य लक्षणं परिष्करोति- ''विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं ध्रुवत्वम्'' तन्मते एतत् अवधिभूतं ध्रुवम् सक्रियनिष्क्रियभेदेन वैविध्यं प्राप्नोति। धावतोऽश्वात् पतति इत्यत्र चलम् अश्वादिकम्, ग्रामात् आयाति, वृक्षात् पत्राणि पतन्ति इत्यत्र अचलम् ग्रामवृक्षादिकम्।

प्रसंगेऽस्मिन् शंका आविर्भवति यत् 'कुड्यात् पततोऽश्वात् पतति चैत्रः' इति वाक्येऽस्मिन् विश्लेषहेतुपतनक्रियायाः आश्रयत्वे अश्वस्य अवधित्वं न सिद्धयति, अत्र अपादानस्यावकाशः भवितुं शक्ष्यति। परश्चात्र शंका निवारिता- ध्रुवत्वे विश्लेषसामान्यं न अपेक्षितम् अपितु तद्व्यक्तित्वेन विश्लेषः अभीष्टः। अत एव कुड्यात् पततोऽश्वात् पतति चैत्रः इत्यस्मिन् स्थले चैत्रनिष्ठपतनक्रियानिरूपितं अवधित्वम् अश्वे अस्ति, अपि च पतनक्रियायाः चैत्रनिष्ठत्वात् अश्वे तदनाश्रयत्वमपि वर्तते। एवमेव अश्वनिष्ठपतनक्रियायाः अवधित्वं कुड्ये स्यात्। अतो हेतो अत्र अश्वकुड्योः ध्रुवत्वम् निर्विवादम् इति कारिकायां[14] स्पष्टम्।

**समीक्षा -**

भर्तृहरेः टीकाकारौ संरब्धोदासीनेति साधनद्वयसाध्यं अपादानमुच्यते। (इत्यादिपदेन महाभाष्यस्य उद्योतटीका वर्तते, तत्रापि इयमेव कारिका एतस्मिन्प्रसंगे उद्धृता)। अत्र संरब्धः अर्थात् चलः अश्वादिः अपि च उदासीनः अचलः ग्रामादिः इत्यर्थः। परञ्च भूषणसारेत्यादौ[15] अपाये उदासीनभावस्यैव स्थितिद्वयं चलं वा अचलं वा इति स्वीकृतः। वाक्यपदीयस्य व्याख्यानद्वये उदासीने न द्वयोः चलाचलयोः अन्तर्भावः क्रियते। तत्र तु संरब्धोदासीनोभयकर्तृकः अपायः अङ्गीकृतः इति विशेषः।

धावतोऽश्वात् पतितः इत्यत्र तु क्रियायाः अनावेशात् अश्वस्य ध्रुवत्वम् उक्तम्। परञ्च ''परस्परात् युध्यतो मेषौ अपसरतः'' इत्यत्र मेषद्वयक्रियाजन्ये अपाये उभौ अपि मेषौ कर्तृत्वेन अध्रुवौ स्तः। अतस्मात् अत्र अपादानत्वं न विवक्षितम्।

किञ्च अत्रापि अपादानत्वं स्यात्। एकस्मिन्नेव अपाये तदविभागजनकक्रिया व्यक्तिभेदात् भिन्ना प्रतीयते। अतएव एतन्मेषनिष्ठक्रियायाः अपरमेषे अभावात् अनाश्रयत्वात् वा उभयोः मेषयोः अपादानत्वं ग्राह्यम्।

प्रोक्तं च वाक्यपदीये - ''मेषान्तरक्रियापेक्षमवधित्वं पृथक्-पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्-पृथक्''[16]।

अर्थात् इतरमेषक्रियायां इतरमेषस्यानावेशात् इतरमेषापसरणक्रियायां इतरस्य ध्रौव्यम्। स्वक्रियायां तु द्वयोः मेषयोः कर्तृत्वं पृथक् पृथक् आचक्षते। द्वयोः मेषयोः परस्परं एकस्यापेक्षया अपरस्य अवधित्वं पुनः अपरस्य अपेक्षया तस्यापि ध्रुवत्वम् निश्चितम्। परञ्च यदा मेषयोः परस्परं अवधिभावो न विवक्ष्यते, तदा अन्यो पर्वतादिः अवधित्वं न तु मेषयो :। तत्र तु पर्वतात् मेषौ अपसरतः इति अपादानसंज्ञा।

एवम्प्रकारेण अपायो द्विविधः विवक्षितः। अन्यतरकर्मजः उभयकर्मजश्च। स्थाणो श्येनो अपसर्पति इत्यत्र अन्यतरकर्मजे विभागे अपायजनकक्रियायाः आश्रयविरहात् उदासीनत्वात् वा स्थाणोः ध्रुवत्वम् अक्षुण्णम्।

परस्परान्मेषौ अपसरतः इत्यत्र उभयक्रियाजन्यापाये यद्यपि उभौ अपि मेषौ अपायाश्रयत्वात् अध्रूवौ स्तः । तथापि अपसर्पतो मेषात् मेषो अपसरति इत्यत्र कर्तृभेदात् भिन्न एव अपायरूपे क्रिये इतरापायेन इतरस्यानावेशात् द्वयोः मेषयोः ध्रुवत्वम् अपि च अवधित्वम् ग्राह्यम् । एवं अपादानत्वं सिद्धम् ।

अपादानस्य प्रसंगे अवधिं विहाय गतिमात्रेण अपायो न भवति। उच्यतेऽपि ''विभागजसंयोगानुकूलोऽवधिसाकांक्षो गतिविशेषः अपाय: ''[17] । अत एव अवधिना विना गतिः अपायः न स्वीक्रियते । प्रदीपे कैयटः ख्यापयति- ''सति ह्यवधौ गतिरपायो भवति, नान्यथा गतिविशेषत्त्वात् अपायस्य इति''। गतौ अवधेः अपरिहार्यत्त्वात् 'वृक्षात् पर्ण पतति' इत्यत्र पत्रस्य पतनक्रियायां यदि वृक्षः अवधित्वेन विवक्षितः तर्हि 'वृक्षात् पर्णं पतति' इति षष्ठी प्रयुक्तः ।

भर्तृहरिः आह - ''गतिविना तु अवधिना न अपाय इति कथ्यते । वृक्षस्य पर्ण पतति इत्येवं भाष्ये निदर्शितम्''[17] तात्पर्य वर्तते, वक्षसम्बन्धिनः पर्णस्य पातोऽत्र वाक्यार्थी विवक्षितः , न त्वत्र वृक्षस्य अवधित्वविवक्षा वर्तते । अतः अत्र अपायो न भवति । वार्तिकेऽप्युक्तम् ''न वाऽपायस्याविवक्षितत्त्वात्''[18] । यदि अपायो अत्र विवक्ष्यते तदा वृक्षस्यावधित्त्वात् 'वृक्षात् पर्णं पतति' इति भवति । तत्र न बोध्यते कस्य सम्बन्धिपर्ण ककस्य वा कुररस्य वा इत्यर्थः ।

अध्रूवत्त्वात् गतियुक्तेष्वपादानसंज्ञा न उत्पद्यते । अचलं ध्रुवं एकरूपं चेति परिस्पन्दे ध्रुवता न भवितुं शक्यते । यथा - अश्वत्रस्तादिति । अत्र त्रासपूर्वके परिस्पन्देऽनेका र्थत्वात् धातूनां त्रसिर्वर्तते । त्रस्तश्चाश्वः पातस्य निमित्तम् भवति । अतस्मात् पूर्वमश्वस्य त्रस्तत्वेन सह सम्बन्धः, अनन्तरं पतित इत अनेन । अतः ध्रुवताऽत्र अश्वस्य नास्ति ।

**भर्तृहरेर्मते अपादानस्य भेदत्रयम्, तल्लक्षणं च -**

भर्तृहरिः विभक्तिविधानक्रमेण सम्प्रदानम् विविच्य क्रमप्राप्त अपादानम् व्यनक्ति । अत्र त्रिविधं अपादानम् व्याख्यातम्-[19]।

अपाये साध्ये यद् ध्रुवम् एकरूपम् तद् साधनम् अपादानम् स्यात्। अवधिविशेषापेक्षत्वात् चलाचलोभयकर्तृकोऽपाय: अपादानस्य विषयः सः निर्दिष्टः स्वशब्देनोपात्तः लभ्यः वा तद् प्रथमं अपादानम् । यथा- चैत्रः ग्रामात् आगच्छति, पर्वतात् अवरोहति । इत्यत्र अपायस्य विभागरूपस्य विष्ठत्वात् ग्रामचैत्रौ पर्वतचैत्रौ च उभौ अपाये कर्तारौ स्तः । तत्र ग्रामोऽचलः चैत्रस्तु चलः एवमेव पर्वतोऽपि अचलः । अत्रागमनम् अवरोहणं च स्वरूपेण जन्यजनकयोरभेदमादाय वाऽपायः । स चात्र साक्षात् धातुना निर्दिष्टत्वात् निर्दिष्टविषयं अपादानं वर्तते ।

द्वितीयम् अपादानम् वर्तते उपात्तविषयं। यत्र गुणभावेन प्रधानभावेन अथवा धात्वर्थेन स्वान्तर्गृहीतोऽपायलक्षणो विषयो येन तदुपात्तविषयम् । यथा बलाहकात् विद्योतते विद्युत् इत्यत्र बलाहकात् निःसृत्य ज्योतिः विद्योतते अथवा बलाहकात् विद्योतनं निःसरति इत्यर्थः । अत्र निःसरणागे विद्योतने , विद्योतनाङ्गे निःसरणे वा विद्युतिः वर्तते । अत्र निःसरणरुपोऽपायो धात्वर्थविद्योतनेन गुणतया प्राधान्येन वा उपात्तः इति उपात्तविषयम् अपादानम् । अन्यत्रापि यथा कुसूलात् पचति, ब्राह्मणाच्छंसी इति । प्रथमं तावत् आदानाङ्गे पाके पचिः वर्तते । कुसूलात् आदाय पचति इत्यर्थः । अपरे ग्रहणाङ्गे शंसने शशिर्वर्तते । ब्राह्मणग्रन्थात् गृहीत्वा शंसति इत्यर्थः ।

अपेक्षितक्रियम् अपादानम् तत्र वर्तते यत्र अपायरूपा क्रिया अपेक्षिता वर्तते । यथा पाटलिपुत्रकेभ्यः आढ्यतराः । 'अत्र प्रकर्षार्थकतरप्प्रत्ययसामर्थ्यात् विभागहेतुः अनुमीयमानापकर्षक्रिया अपायलक्षणे अपेक्षिता क्रिया असौ अत्र, अपेक्षितक्रियं अपादानम् ।

निष्कर्षतः निर्दिष्टविषयं उपात्तविषयं अपेक्षितक्रियञ्चेति त्रिविधम् अपादानम् शब्दशास्त्रे सम्मतम् । एवमेव त्रिविधमेवापादानं ध्रुवमपायेऽपादानम् इत्येकेनैव सूत्रेण भासितम् । तथापि "भीत्रार्थानां भयहेतुः"[20] इत्यादिसूत्रात् लक्षितं अपादानं बालानां सुखबोधाय विरच्यते इति भर्तृहरिमते । इत्यलम् ।'

**सन्दर्भग्रन्थसूची :**


1. तर्कसंग्रह ।
2. वैयाकरणसिद्धान्त कौमुदी ।
3. वाक्यपदीयम् प्रथमो भागः ।
4. अष्टाध्यायी ।
5. वैयाकरणसिद्धान्त कौमुदी ।
6. अष्टाध्यायी ।
7. वाक्यपदीयम् द्वितीयो भागः ।
8. वाक्यपदीयम् तृतीयो भागः ।
9. वाक्यपदियम् प्रथमो भागः ।
10. व्याकरणमहाभाष्यम् ।
11. वैयाकरणसिद्धान्त कौमुदी ।
12. अष्टाध्यायी।
13. वाक्यपदीयम् द्वितीयो भागः ।
14. वाक्यपदीयम् प्रथमो भागः ।
15. वैयाकरणभूषणसारे ।
16. वाक्यपदीयम् तृतीयो भागः ।
17. व्याकरणमहाभाष्यम् ।
18. अष्टाध्यायी ।
19. वाक्यपदीयम् द्वितीयो भागः ।
20. सिद्धान्तकौमुदी कारकप्रकरणे ।



*सहायकाचार्यः, व्याकरणविद्याशाखा*

*केन्द्रीयसंस्कृतविश्वविद्यालयः,*

*जयपुरपरिसरः, जयपुरम्*

# स्वतन्त्रतासंग्रामे योगस्य योगदानम्

**डॉ. हरिराममीणा**



योग: भारतीयसंस्कृतेः महत्त्वपूर्णः भागः वर्तते। यस्य चर्चा वेदे उपनिषदि, रामायणे, महाभारते, गीतायां तथा च भारतस्य सर्वेषु आध्यात्मिकक्षेत्रेषु प्राप्यते। योगज्ञानेन अस्माभिः सर्वासाम् आधुनिकसमस्यानां समाधानं कर्तव्यम् अस्ति। योग: अस्माकं जीवने रोग, निराशां च परिहारयति।

आदर्शसमाजस्य निर्माणमनेन योगेनैव सम्भाव्यते। योगःअस्मभ्यं वसुधैव कुटुम्बकम्[1] इत्यस्य ज्ञानं ददाति। इत्युक्ते राष्ट्रियसमायोजनस्य भावनां प्रति नयति। तस्य अयं प्रभाव: यत् भारतीयस्वतंत्रासंग्रामे अनेके आन्दोलनकर्तारः राष्ट्रभक्ताः योगिनः सन्तः राष्ट्रहिताय स्वप्राणानामाहूतिं दत्तवन्तः। तस्मिन्नेव प्रकरणे स्वातन्त्र्यसघर्षस्य बहूनां योद्धृणां योगेन सह गहनं सम्बन्धः आसीत्। यथा-महात्मागान्धीः, बालः, पालः, लालः, विवेकानन्दः स्वामिदयानन्दसरस्वती, स्वामिश्रद्धानन्दः महर्षिएनीबेसेटमहोदया, भगतसिंहः, खुदीरामबोसः इत्यादयः। गीताज्ञानमत्यन्तम् उत्कृष्टं मन्यते अद्य पश्चिमजनैः। गीतायाः अनेके अनुवादाः पाश्चात्यभाषासु प्राप्यन्ते, तावन्तः अनुवादाः बाइबिलम् विहाय अन्येषु केष्वपि धार्मिकग्रन्थेषु नैव प्राप्स्यन्ते। जर्मनीदेशस्य दर्शनशास्त्रस्य प्राध्यापकः शोपेनहारःपुस्तकालये गीतायाः अनुवादं पठित्वा हर्षेण नृत्यं कर्तुम् आरब्धवान्। प्रजाभिः पृष्टः सन् उक्तवान् यत् एतादृशं महत् ज्ञानं तदपि रणक्षेत्रे वक्तुं शक्यते, अहं तत् विश्वसितुम् अपि न शक्नोमि।

एतस्य सर्वस्य आन्दोलनस्य जीवनं योगेन प्रभावितम् अस्ति। तेषां दैनन्दिनजीवने दृश्यते। योगः भगवद्गीतायां स्पष्टतरः व्याख्यातः अस्ति। यथा-

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ।।**[1]

अर्थात् योगः कर्मसु कौशलम् इति योगस्य लक्षणं अस्ति। अनेकविषयाः अत्र समुपलभ्यन्ते तद्यथा- ज्ञानयोगः, कर्मयोगः, भक्तियोगः, इत्यादि। अतः वयं भगवद्गीतायां योगस्य स्वातन्त्र्यसङ्घर्षस्य त्रीन् भागान् द्रष्टुं शक्नुमः। महात्मागान्धिमहोदयः नेचुरोपैथी तथा योगःअयम् उभयत्रापि अत्यन्तं विश्वसिति स्म। न केवलं एतत् अपितु सः स्वस्यापि परिवारजनानामुपरि प्राकृतिकरोगस्य विधानं स्वीकुर्वन् आसीत्। सः स्वपरिवारस्य अतिरिक्तं प्रख्यातस्य उद्योगपतिनः घनश्यामदासबिरलाइत्यस्य प्राकृतिकरोगचिकित्सकः अपि आसीत्। तस्य मतेन सः बहुधा शीतलतां प्राप्नोति स्म। गान्धिमहोदयः तस्मै आहारसम्बद्धान निर्देशान् दत्त्वा स्वास्थ्यं प्राप्तुं साहाय्यं करोति स्म। यः कोऽपि गान्धिमहोदयस्य सम्पर्कं प्राप्तवान् सः तस्मै तस्य स्वास्थ्यसमस्यायाः विषये अवदत्।

गान्धिमहोदयः यदा अफ्रिकादेशे आसीत्तदा सः कब्जरोगेण पीडितः आसीत्। रोग दूरीकर्तुं तस्य किञ्चित् चूर्णं वा औषधं वा सेवनीयम् आसीत्। यदा सः कब्जरोगेण अत्यधिकः पीडितः अभवत् तदा तस्य निवारणार्थं औषधानि च सेवन् आसीत् तदा सः आफ्रिकादेशे एकस्य आङ्ग्लमित्रस्य परामर्श कृतवान्। सःप्राकृतिकरोगस्य जनकस्य लुईस् कून इत्यस्य 'द न्यू साइंस आफ् हीलिंग' इति पुस्तकं, जस्ट् इत्यस्य 'रिटर्न टु नेचर' इति पुस्तकं

पठितुं निर्दिष्टवान्। एतयोः पुस्तकयोः अध्ययनानन्तरं स्वास्थ्यसम्बद्धेषु स्वाभाविकतर्केषु गान्धिमहोदयः प्रभावितःअभवत्। सः पुस्तके वर्णितैः प्राकृतिकचिकित्साविधिभिः शीतघर्षणम्, स्लिटस्नानम्, मेहेनस्नानं तथा श्रोणिमृत्तिकापट्टिका इत्यादीन् - लघु-लघु प्रयोगान् स्वयमेव कर्तुं आरब्धवान्। कालान्तरे गान्धिमहोदयः प्राकृतिकचिकित्साविशेषज्ञः भूत्वा अस्य औषधस्य प्रचारस्य महत्त्वं बोधयति स्म। अनेन कारणेन महात्मागान्धिनः जन्मदिवसे अक्तूबरमासस्य द्वितीये दिनाङ्के प्राकृतिकदिवसः अपि आचर्यते। गीताविषये तेन यानि मतानि प्रकटितानि तानि चिकित्सा मतानि सर्वाभ्यः भाषाभ्यः अधिकं प्रभावशालीनि मन्यन्ते। हिन्दुधर्मस्य अध्ययनं कर्तुम् इच्छन् प्रत्येकस्य हिन्दोः कृते गान्धी वदति यत्, 'इदं सुलभं पुस्तकम् अस्ति।' जीवने तस्य उपयोगः कथं करणीयः इति व्याख्यातुं पर्याप्तम्। गीतायां कस्यापि धर्मस्य प्रति द्वेषः नास्ति। एतत् वक्तुं महती प्रसन्नता भवति यत् बाइबिल-कुरान-जादव्स्ता इत्यादीनामपेक्षया विश्वस्य जनाः श्रद्धापूर्वकं गीतां पठन्ति। एतेन पठनेन मम गीताकामना सुदृढा अभवत्। अहं हिन्दुः इति गर्वम् अनुभवामि गान्धिमहोदयः लन्दननगरे गीतायाः परिचयं कारितवान्। एकस्मिन् दिने सः स्वामिविवेकानन्दस्य चमत्कारिकभाषणानां विषये वृत्तपत्रे पठित्वा स्वस्य लन्दननिवासस्थाने मेलितुं गतः। सः तस्मिन् समये विश्रामं कुर्वन् आसीत्। सः स्वस्य एकेन पाश्चात्यशिष्येण सह वार्तालापं कर्तुं आरब्धवान्। सः गीताज्ञानेन बहु प्रभावितः अभवत् तथा च तस्मिन् गीताध्ययनस्य भावना उत्पन्ना। अस्माकं सनातनधर्मस्य महतः ग्रन्थस्य महाभारतस्य मध्यभागे अमूल्यविश्वकोशः संगृहीतः अस्ति। जीवनस्य कला तथा नरस्य नारायणे परिवर्तनस्य मार्गदर्शनं गीतायां वर्तते। अत एव अनेकैः महापुरुषैः कर्तव्यज्ञानकोशः अद्भुतः इति उक्तम्। गीता पूर्वं 'गीता मैया' इति उच्यते स्म । गान्धी एकस्मिन् स्थाने लिखति - मम माता बाल्यकाले एव मृता आसीत्। मातुः अभावे मया प्रेम स्नेहः, संसारस्य ज्ञानं मार्गदर्शनं च गीतायाः प्राप्तम्। श्रीकृष्णः पुरुषोत्तमः यः उपनिषद्गावः दुहति। तस्य भारतीयदर्शनस्य सारः तासां गवां दुग्धम्। तस्मिन् समये गीतायाः धैर्यवान् गम्भीरः शब्दः अस्मान् चेतयन् इव अस्माकं हृदयेषु एवं प्रतिध्वनति स्म।

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ।।**[3]

क्लैब्यं तव न शोभते।। हे पुरुष सिंह ! लक्ष्यस्य बाधकानि क्लेशानि अतितर्तुं भवतः स्वभावः एव। हृदयस्य क्षुद्रदुर्बलभावेषु विजयी भूत्वा त्वं प्रतिबद्धो भव। गीता आत्मनः अमृतत्वम् अखण्डतां च प्रतिपादयति, देहसङ्गात् लक्ष्यसाधने ये विक्षिप्ताः तेभ्यः जीवनसङ्घर्ष योद्धृभ्यः निर्भयस्य सन्देशं च ददाति। आत्मविश्वासं जागरय्य व्यक्तौ निर्भयतामानेतुम् इदं पुस्तकम् अस्ति। अहं न केवलं शरीरं, अपितु शरीरं केवलं मम आवरणम् अस्ति। अहं नित्यः व्याप्तः आत्मा यः कदापि न म्रियमाणः। स आत्मा यः शस्त्रेण नष्टं नैव भवति, अग्निः तं न दहति, जलं आर्द्रं कर्तुं न शक्नोति, वायुः शोषितुं न शक्नोति।

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न् शोषयति मारुतः ।।**[4]

एतेन प्रवचनेन भारतस्य इतिहासः कियान् प्रभावितः अभवत् इति इतिहासस्य पृष्ठेषु ज्ञायते। अस्माभिः

दृष्टं यत् अस्माकं राष्ट्रस्य क्रान्तिकारिणः अस्य प्रकाशमानस्य उपदेशस्य विनोदे फाँसीपाशं चुम्बितवन्तः तथा च अत्याचाराणाम् अनन्तरम् अपि अत्याचारिणः तेषां मुखात् स्मितं मार्जयितुं न शक्तवन्तः।

**सरदारभगतसिंहः**

चरथावलः इत्यत्र जनितः सफलयोगी अभयदेवः तथा च सरदारभगतसिंहेन सह व्यतीताः क्षणाः तस्य साहित्यस्य महत्त्वपूर्णः भागः वर्तते। मुजफ्फरनगरस्य चार्थवलग्रामस्य अरविन्दनिकेतनाश्रमे अभयदेवस्य जीवनपत्रेषु शहीद-ए-आजमस्य देशभक्तिभावः उल्लिखितः अस्ति। भगतसिंहः, सुखदेवः, राजगुरुः च लाहौर षड्यंत्रप्रकरणे 23 मार्च 1931 तमे वर्षे ब्रिटिश-सर्वकारेण फाँसीपाशदण्डं प्राप्तवन्तः, तेषां सहभागिने बटुकेश्वरदत्ताय च आजीवनकारावासस्य दण्डः दत्तः। अरविन्दनिकेतनस्य संस्थापकः वेदमनीषी स्वतंत्रतासेनानी-आचार्य-अभयदेवेन सह शहीदभगतसिंहस्य आत्मीयता आसीत्। 1967 तमे वर्षे अभयदेवस्य कृतिः एक योगयात्री इत्यस्य पाण्डुलिपयः भगतसिंहस्य विशेषवस्तुषु उल्लिखिताः सन्ति।

1928 तमवर्षस्य शिशिरस्य घटनायाः किञ्चन उल्लेखः कृतः अस्ति। अहं स्वामिश्रद्धानन्दस्य समाने विशाले कक्षे निवसन् आसम्। एकान्तेन मां मेलितुम् इच्छन् कश्चित् पगडीधारियुवकः सम्भाषणं प्रारब्धवान् सः 'अहं भगतसिंह' इति अवदत् । तस्य प्रथमसमागमस्य अनन्तरं परस्परं स्नेहः वर्धितः। लाहौर-नगरे ब्रिटिश-पुलिस-अधिकारिणः सौण्डर्स-इत्यस्य वधस्य अनन्तरम् एतस्य समागमः अभवत् । भगतसिंहः पठनप्रियः आसीत्। मया वारद्वयं तस्य युतकस्य कोषे Gutka Size French Revolution इति पुस्तकं दृष्टम्। एकदा सः माम् अवदत् यत् भवतः योगविज्ञानं मम कृते किमपि उपयोगं न करोति, परन्तु अहं निश्चितरूपेण योगं ज्ञातुम् इच्छामि। एतादृशं योगाभ्यासं कथयतु, येन आङ्ग्लाः मम किमपि कर्तुं नैव शक्नुयुः। शान्तं सम्मोहितं च कृत्वा अपि मम मनसः रहस्यानि बहिः आगन्तुं न शक्नुयुः। अभयदेवः तस्मै एतादृशानां बहूनां नामानि दत्तवान्, ये भगतसिंहस्य क्रान्तिकारिसङ्गठने मित्राणि भवितुम अर्हन्ति स्म।

**खुदीरामबोसः**

खुदीरामबोसः एकः युवाक्रान्तिकारी तथा देशभक्तः आसीत्। पश्चिमबङ्गदेशस्य मिदनापुरमण्डले बहुवैनीनामके ग्रामे 3 डिसेम्बर् 1889 तमे वर्षे अस्य जन्म अभवत्। खुदीरामबोसस्य मातुः नाम लक्ष्मीप्रियादेवी आसीत्। देशाय स्वतन्त्रतां दातुं भावना तस्मिन् एतावती आसीत् यत् सः नवमकक्षायाः अध्ययनं त्यक्त्वा क्रान्तिकारिणाम् आन्दोलने संलग्नः। केवलं 19 वर्षे एव सः भारते शासनं कुर्वन्तं ब्रिटिशसर्वकारं स्फोटप्रक्षेपेण आक्रमणं कृतवान् अतः तेन मृत्युदण्डः प्राप्तः। अन्तिमेषु क्षणेषु अपि सः भगवद्गीतां हस्ते स्थापितवान् आसीत्।

**मुनीनां सन्त-जनानां च योगदानम् -**

स्वतन्त्रतासंग्रामे सन्तजनानां योगदानस्य विषये अल्पं लिखितम् अस्ति। अस्य कारणम् अस्ति यत् येषां हस्तेषु सत्ता गता आसीत् तेषु अधिकाः हिन्दुविरोधिनः आसन्। बङ्गालदेशे आन्दोलनप्रकरणे संन्यासीनामान्दोलनस्य अपि प्रमुखतया चर्चा कृता अस्ति। बङ्गालदेशे हिन्दुजनानाम् उपरि अत्यधिकमत्याचारः कृतः आसीत्। आङ्ग्लैः हिन्दुजनानां तीर्थस्थानं प्रति गमनं निषिद्धम्, यस्मात् कारणात् शान्ततपस्विषु असन्तुष्टिः आसीत्। बङ्गालदेशे हिन्दुधर्मान्तरणं महता वेगेन भवति स्म। दरिद्रजनस्य दुःखानि श्रोतुं कोऽपि नासीत्।

1763 तः 1773 पर्यन्तं आङ्ग्लानां विरुद्धं संन्यासीनाम् आन्दोलनं सर्वाधिकः प्रसिद्धः आसीत्। एतस्य विद्रोहस्य निवारणाय वारेन हेस्टिङ्ग्स् इत्यनेन कठोरकार्याणि कृतानि। सः संन्यासीनां हिन्दुजनानाञ्च निर्दयतापूर्वकं वधं कृतवान्। एतस्य आन्दोलनस्य अनन्तरं देशस्य संन्यासिनः जागृताः।

देशं स्वतन्त्रं कर्तुं, अत्र धर्म, संस्कृति, सभ्यतां च पुनः जागरयितुं देशे परिभ्रमतां जनानां जागरणाय भारतीयसन्तजनैः महत् कार्यं कृतम् आसीत्। देशस्य जनान् एकीकर्तुं सर्वप्रथमं देशस्य जनानां विचाराः धार्मिक सांस्कृतिक-आधारेण समानाः भवेयुः।

**दयानन्दसरस्वती -**

यदा वयम् अस्य समग्रं जीवनं पश्यामः तदा प्रमुखानि तथ्यानि ज्ञातुं शक्नुमः। सः सिद्धयोगी वैदिकमहात्मा तथा च ज्ञानसम्पन्नः आसीत्। अन्येऽपि बहवः गुणाः लक्षणानि तस्य जीवने आसन्। सत्यशिवज्ञानप्राप्तिमृत्युविजयं च स्वजीवनस्य लक्ष्यं कृतवान् आसीत्। अत एव वयं पश्यामः यत् गृहात् निर्गत्य सः देशस्य सर्वेषु सम्भाव्यस्थानेषु ज्ञानैः योगैः च युक्तो भूत्वा यावत् ज्ञानप्राप्तिप्रवीणतां न प्राप्नोत् तावत् अन्वेषणं कुर्वन् आसीत्। तस्य गुणः आसीत् यत् सः स्वलक्ष्यसिद्धिसम्बद्ध यत्किमपि ज्ञानं प्राप्नोति स्म, तस्मात् परं अन्येषु सम्भाव्यस्थानेषु गच्छति स्म। दयानन्दः जीवनलक्ष्यस्य पूर्तये सहायतार्थं ब्रह्मचर्यस्य प्रारम्भिकदीक्षां तथा संन्यासं च गृहीतवान् आसीत्। तेन प्रवीणगुरुणां मार्गदर्शनेन योगाभ्यासः अपि सफलतया कृतः आसीत्। अनन्तरम् अहमदाबाद-अबू-पर्वतयोः दर्शनं कृत्वा अपि योगाभ्यासः कृतः तथा च अत्रापि योगशिक्षणस्य ज्ञानं प्राप्तवान्। सः स्वगृहे एव स्थित्वा 21 वर्षपर्यन्तं अनेकेषां संस्कृतग्रन्थानाम् अध्ययनं कृतवान् आसीत्। अतः यात्राकाले यत्र-यत्र पुस्तकं लभते स्म तत्र तत्र तत् प्राप्य अध्ययनं करोति स्म। ज्ञानसंशोधनार्थं सः योगिभिः महात्मभिः सह मिलितवान् तथा च साहित्यसंशोधनं प्रति तस्य बुद्धिः अतीव प्रबला आसीत्। पुस्तकेषु यत् लिखितं तत् सत्यं प्रामाणिकं वा न वा इति परीक्षते स्म। तस्य केचन तन्त्रग्रन्थाः आसन्। सः एकदा अवसरं प्राप्य शरीरस्य अन्तः चक्राणां वर्णनं कर्तुम् इष्टवान् नद्यां प्रवहमानं मृतशरीरं बहिः निष्कास्य छूरेण खण्डयित्वा पुस्तकवर्णनेन सह सङ्गतं कृतवान्। यदा तत् वर्णनं सम्यक् न लब्धं तदा तेन मृतशरीरं नद्यां क्षिप्तम्। एतेन सत्यानुसन्धानं प्रति तस्य दृढनिश्चयः दर्शितः। परन्तु तेषां ज्ञानप्राप्त्यर्थं अग्रे यात्रा अद्यापि आगच्छति। अत्र वयम् एतदपि पश्यामः यत् कोऽपि सफलः योगी लौकिकज्ञानेन, विज्ञानेन, वेदज्ञानेन च सम्पन्नः न भवति। अतः योगसिद्धिप्राप्तेऽपि तस्य ज्ञानतृष्णाशमनार्थं प्रयत्नाः निरन्तरं कर्तव्याः। एतदर्थं तेन गुजरातस्य धार्मिकं तीर्थस्थानं नर्मदातटं तस्य उत्पत्तिं राजस्थानस्य अबूपर्वतस्य च सम्यक् अन्वेषणं कृतम् आसीत्। अत्र शोधं कृत्वा सः बहु दुःखं प्राप्नोत् किञ्च सफलतां न प्राप्तवान्। किञ्चित्कालानन्तरं 1857 तमे वर्षे प्रथमेन स्वतन्त्रतासङ्घर्षेण सह समग्रः देशः केनचित् प्रकारेण वा अन्येन वा संघर्षं कृतवान्। दासमुक्तिसमाधानं सर्वभारतीयानां समानचिन्तनं भवेत् सर्वे च वेदाधारिताः भवेयुः इत्येवम् अस्य चिन्तनम् आसीत्। अयं हि आर्यसमाजस्य संस्थापकः देशभक्तः स्वामिदयानन्दः आसीत्। तस्य मूलनाम मूलशङ्करः आसीत्। यः 1857 तमे वर्षे देशस्य स्वातन्त्र्यान्दोलनस्य क्रान्तिं प्रति महत्त्वपूर्णं योगदानं दत्तवान्। स्वामिविवेकानन्दस्य 20-25 वर्षपूर्वमपि स्वतन्त्रता-आन्दोलनस्य क्रान्तिः आरब्धा आसीत्। भगतसिंहः, आजादः

अपि तेन प्रेरिताः आसन्। लोकमान्यतिलकः अपि तं स्वराजस्य प्रथमदूतम् इति आह्वयति स्म।

**स्वामी श्रद्धानन्दः**

तस्य मूलनाम मुन्शीरामः आसीत्। भारतस्य महान् देशभक्तमुनिषु सःअग्रगामी आसीत्। स्वामी श्रद्धानन्दः देशं आङ्ग्लानां दासत्वात् मुक्तिं कर्तुं दलितानाम् अधिकारान् प्राप्तुं च अनेकानि कार्याणि अकरोत्। सः पाश्चात्यशिक्षणस्य स्थाने वैदिकशिक्षाव्यवस्थायां बलं दत्तवान्। तस्य गुरुः स्वामिदयानन्दः आसीत्। तस्मात् प्रेरणां गृहीत्वा अयं स्वतन्त्रतायाः वैदिकप्रचारस्य च महत् आन्दोलनं प्रारब्धवान् आसीत्, यस्य कारणेन सः गोलिकाभिः मारितः। 1922 तमे वर्षे लेखकः पुनः मियावाली-कारागारे अयं स्वामिमहोदयेन सह मिलितवान्, यस्य दण्डाः कतिचन दिवसानां कृते एव अवशिष्टाः आसन्। अयं कारागारेऽपि गीतायाः, रामायणस्य, दर्शनविषयस्य च प्रवचनं ददाति स्म। प्रेमिणां मण्डलं प्रतिदिनं समागच्छति स्म। मौलाना-असफअली गीतां रुचिपूर्वकं पठति स्म तथा च यदा-यदा कोऽपि संशयः भवति स्म तदा-तदा स्वामिमहोदयः अतीव आनन्देन तस्य समाधानं करोति स्म। कदाचित् राजनीतिविषये, कदाचित् दर्शनविषये, कदाचित् फारसीसाहित्यविषये च चर्चा भवति स्म। 1901 तमे वर्षे आङ्ग्लैः निर्गतशिक्षाव्यवस्थायाः स्थाने वैदिकधर्मस्य भारतीयत्वस्य च शिक्षाप्रदा संस्था 'गुरुकुलम्' इति संस्थायाः स्थापना कृता। हरिद्वारस्य काङ्ग्रीग्रामे 'गुरुकुलविद्यालयः' उद्घाटितः।

**स्वामिविवेकानन्दः**

स्वामी विवेकानन्दः 1892 तमे वर्षे भारतभ्रमणकाले ज्ञातवान् यत् दासदेशात् कोऽपि राष्ट्रः शिक्षा प्राप्तुं न शक्नोति, अतः 'भारतस्य स्वतन्त्रता' भारतस्य कृते दैवेन निर्धारिता। मानवीयभूमिकां पूर्ण कर्तुम् आवश्यकता अस्ति, परन्तु तत् स्वतन्त्रतां विना नैव सम्भाव्यते।

अयं भारतभ्रमणकाले अपि ज्ञातवान् यत् आङ्ग्लशासनस्य शोषणनीतीनां कारणेन अस्माकं देशस्य कृषकाणां व्यापारिणां च स्थितिः कष्टप्रदा जाता अस्ति।

वामपक्षस्य तथा तथाकथितधर्मनिरपेक्षविचारधाराणां कारणेन भारतं विनम्रतां प्राप्य पुनः गर्ते पतितम्। हिन्दुनां भिन्न-भिन्न-सम्प्रदाय भेदाः निराशाजनक-विरोधी इव भासते स्म। 1897 तमे वर्षे स्वामीजी अवदत् - "आगामिषु 50 वर्षेषु अस्माकं एकमेव लक्ष्यं भवेत् - अस्माकं भारतमाता" इति। तथा च पञ्चाशत् वर्षाणाम् अनन्तरम् भारतेन स्वातन्त्र्यं प्राप्तम्। एतेन देशस्य नागरिकाः सर्वेषु स्तरेषु स्वातन्त्र्यं प्राप्तुं प्रेरिताः। सः सर्वं दौबर्बल्यं त्यक्तुम् उपदेशं कृतवान् यत् जनान् दुर्बलं करोति, यथा जातिवादः, प्रान्तवादः, भाषावादः, दलराजनीतिः इत्यादयः। सर्वे काले वेदं प्रतिगच्छेयुः, अन्यथा देशस्य खण्डिततत्वे कालः न स्यात्। तस्य दृष्ट्या व्यवहारे च योगविद्यायाः बहुआयामी समन्वयः अस्ति। ज्ञानकर्मभक्तित्रिवेणीज्ञाने तस्य व्यक्तित्वस्य माध्यमेन तेजः प्रवहति तस्य राजयोगस्य पराकाष्ठा तस्य जीवनं सूर्यवत् दीप्तं करोति। तेन योगविषये प्रकटितानि मतानि एकप्रकारेण योगज्ञानस्य आधुनिकभाष्यम् अस्ति। योगस्य बहव्यः धाराः सन्ति।

**महर्षिः अरविन्दः**

बङ्गालस्य महान् क्रान्तिकारिषु अन्यतमः महर्षिअरविन्दः देशस्य आध्यात्मिकक्रान्तेः प्रथमः द्योतकःआसीत्।तस्य आह्वानेन सहस्रशः बङ्गालयुवकाः देशस्वतन्त्रतायै हसित्वा फाँसीपाशान् चुम्बितवन्तः आसन्।

सः सशस्त्रक्रान्तेः पृष्ठतः प्रेरणादायी आसीत् । अरविन्दः उक्तवान् आसीत् यत् सर्वकारेण क्रान्तिकारिणां कारागारं दातव्यं पीडनीयं वा, परन्तु एतत् सर्वं वयं नैव सहामहे, एतत् स्वतन्त्रता-आन्दोलनं कदापि न स्थगितम्। एकः दिवसः अवश्यमेव आगमिष्यति यदा आङ्ग्लाः भारतं त्यक्ष्यन्ति। भारतेन स्वातन्त्र्यं अगस्तमासस्य 15 दिनाङ्के प्राप्तम्, अस्मिन् दिने तस्य जन्मदिवसः आचर्यते इति न संयोगः। अयं प्रथमः क्रान्तिकारीआसीत् किन्तु पश्चात् सः अध्यात्म प्रति मुखं कृतवान्, यतः सः अवागच्छत् यत् आध्यात्मिकोन्नतिं विना भारतस्वातन्त्र्यस्य कोऽपि अर्थः नास्ति, अतः एव सः भारतं विश्वे आध्यात्मिकरूपेण एकीकरणाय भारतीयज्ञानस्य ध्वजम् उन्नीतवान्। गौरवभावं विना स्वातन्त्र्यस्य भावनायाः उत्तेजनं कठिनम् आसीत्। अस्माभिः स्वधर्मे ज्ञाने च गर्वः कर्तव्यः। वेद-उपनिषद्-गीता-पाठे गौरव-भावः भवति।

अस्य क्रान्तिकारिणः जन्म 15 अगस्त 1872 तमे वर्षे कोलकातानगरे अभवत्।

तस्य पिता के.डी.घोषः वैद्यः आङ्ग्लानां प्रशंसकः च आसीत्। पिता आङ्ग्लानां प्रशंसाम् अकरोत् किन्तु तस्य चत्वारः पुत्राः आङ्ग्लानां कृते शिरोवेदना अभवन्। 1906 तमे वर्षे यदा विघटन-आन्दोलनं प्रचलति स्म तदा सः बरोडा-नगरात् कलकत्ता-नगरं गतः। 'वन्देमातरम्' इत्यत्र प्रकाशितभाषणैः लेखैःसः ब्रिटिशसर्वकारस्य दमननीतेः घोरनिन्दां कृतवान् आसीत्। अरविन्दः महान् योगी दार्शनिकः च आसीत्। सम्पूर्ण विश्वे दर्शनशास्त्रे तस्य महान् प्रभावः अभवत्। वेदे उपनिषदि अपि अनेन भाष्यं लिखितम्। विशेषतः डार्विन इत्यादिजीवविज्ञानानां सिद्धान्तात् पूर्वं चेतनाविकासस्य कथां लिखित्वा पृथिव्यां जीवनस्य विकासः कथं भवति इति व्याख्यातवान्। अस्याः प्रमुखाः कृतयः सन्ति - लेटर्स ऑन योग, सावित्री, योगसमन्वयः, दिव्यजीवनम्, भविष्यकविता, द मदर इति।

॥ इति शम् ॥

*पूर्वशोधच्छात्रः,*
*दर्शनविद्याशाखाः, केन्द्रीयसंस्कृतविश्वविद्यालयः,*
*जयपुरपरिसरः, जयपुरम्*